एकदोद्योजितः पत्न्या शान्तया त्वरमाणया ।
त्यागेशं दैववशगो निन्दास्तुतिभिरार्चयत् ॥४३॥
कोपितस्तस्य वाक्येन त्यागेशस्त्यागवानपि ।
प्रादात्पुत्रं दीर्घकोपं मूढं पण्डितमानिनम् ॥४४॥
स दृष्ट्वा गर्भसंपन्नां प्रेयसीं रुचिराननाम् ।
मुदाऽन्वितः स्तुतिं चक्रे त्यागेशं स्वेष्टपूरणात् ॥४५॥
कालेन तनयो जातो जप्येश इति नामतः ।
अकार्यकरणे व्यग्रः कोपनो बहुमत्सरः ॥४६॥
सुतस्य दुर्गुणानेतान्स वीक्ष्य भृशविह्वलः ।
चिन्तयन्दुष्कृतं पूर्वं पश्चात्तापमवाप सः ॥४७॥
तमेव करुणासिन्धुं त्यागेशं भक्तवत्सलम् ।
करणत्रितयेनापि सपत्नीकः समार्चयत् ॥४८॥
ऐक्ष्वाकतपसो दातुं फलं रामो यथा गतः ।
गन्तुमर्हसि पुत्रत्वं तथैवास्य महात्मनः ॥४९॥
वसंस्तत्राचिरं कालं त्वं गुणैर्विनयादिभिः ।
मोदयन्पितरौ पूर्णो तैः सहात्रागमिष्यसि ॥५०॥
एतत्पञ्चनदं क्षेत्रं ब्रह्मणाऽपि सुपूजितम् ।
वसन्नत्र चिरं कालं लप्स्यसे भूतिमुत्तमाम् ॥५१॥
नारदो राघवश्चैव द्रक्ष्यतस्त्वामिहागतम् ।
समाधिमत्र संप्राप्य शाश्वतीं कीर्तिमाप्नुहि ॥५२॥
इति प्रतिसमादिश्य कावेर्यन्तर्दधे तदा ।
पश्यत्येव मुनौ तस्मिन्विस्मयास्तिमितेक्षणे ॥५३॥
विमानेनार्कवर्णेन प्राचीं गत्वा दिशं तदा ।
ददर्श तत्क्षेत्रवर्यं त्यागेशायतनं च सः ॥५४॥
स्वतः पूतं तु तत्क्षेत्रं कावेर्युपनदीजलैः ।
त्यागेशसमधिष्ठानात्ततः पूततमं पुनः ॥५५॥

अवरुह्य विमानात्स शान्तचित्तस्तदा मुनिः ।
मेने कृतार्थमात्मानं तत्क्षेत्रस्य च दर्शनात् ॥५६॥
विमानं कामगं दृष्ट्वा किंचित्संभ्रान्तचेतनः ।
नियच्छन्नेत्रजं वारि प्रोवाच मुनिपुंगवः ॥५७॥
गच्छ सांतानिकं पुण्यं राघवाय निवेदय ।
यद्दृष्टं भुवमासाद्य चरता गहने पथि ॥५८॥
इदं च मम वक्तव्यं वचनं दीनजल्पितम् ।
प्रणामशतसंयुक्तं स्मारयन्गदितं प्रभोः ॥५९॥
अनुल्लङ्घ्य तवाज्ञां तु भुवमद्यागतं मया ।
प्रस्थापितो यदर्थं च यतिष्ये नियतात्मवान् ॥६०॥
यदि तेऽनुग्रहमयी दृष्टिर्मयि निपातिता ।
पारं यायां भवाम्भोधेरन्यथा न कथंचन ॥६१॥
यदुक्तं भवता पूर्वमाहरिष्येऽचिरादिति ।
स्मर्तव्यं वत्कृतज्ञेन भवता स्मारये पुनः ॥६२॥
इत्युक्त्वा तु विमानं तं प्रदक्षिणशतैः स्तुतम् ।
अनुमेने दिवं गन्तुं सस्पृहं समुदीक्ष्य च ॥६३॥
क्षणादेव विमानं तदादित्यद्वयमण्डितम् ।
नभस्तलं कुर्वदेव चिरादन्तर्दधे पुनः ॥६४॥
विमानविरहक्लान्तो मन्दं मन्दं चरन्महीम् ।
कमलालयविख्यातां कमलालयशोभिनीम् ॥६५॥
कमलाम्बाजन्मभुवं कमलोद्भवविश्रुताम् ।
पुण्योदकां समासाद्य निर्वृतश्चाभवन्मुनिः ॥६६॥
स्नात्वा च विधिवज्जप्त्वा जप्यं मन्त्रविदुत्तमः ।
अस्ताचलशिरोरत्नं बभौ दिनमणिर्यदा ॥६७॥
दीपैः शतसहस्रैश्च दीपितं दृष्टिहारिभिः ।
त्यागेशं द्रष्टुमुद्युक्तः प्रययौ चालयं मुदा ॥६८॥

सायंतनाराधनाय जनौघः संकुलोऽभवत् ।
वाल्मीकिरपि तान्दृष्ट्वा भक्तिपूतान्मुमोद ह ॥६९॥
यदाऽर्धमण्डपं गत्वा देवलोकादिहागतम् ।
पश्यन्भक्त्या त्यागराजं ध्यानयोगमुपागतः ॥७०॥
तदैव तच्छरीरं तु तिरोभूतं शिवाज्ञया ।
अनुप्रवेशितं सूक्ष्मरूपेणान्ने निवेदिते ॥७१॥
रामब्रह्मा सपत्नीको यथावदभिगत्य च ।
पूजान्ते स्तोत्रमालाभिस्त्यागेशं तं समार्चयत् ॥७२॥
निवेदनेन पूतं तदन्नं दत्तं द्विजन्मना ।
जग्राह न क्षुधाशान्त्यै प्रसाद इति केवलम् ॥७३॥
पाणिभ्यां स गृहीत्वा तद्भक्त्या च विनयेन च ।
प्रेयस्यै प्रददौ सा च तुष्टा जग्राह सादरम् ॥७४॥
गृहीतमात्रेऽस्या अङ्गे क्षणं कम्पो व्यजायत ।
निर्वृतं च मनस्तूर्णं क्षेमाशंसि तदा बभूत् ॥७५॥
पुलकश्च समुद्भूतो वामं नेत्रं तदाऽस्फुरत् ।
रामब्रह्ममनश्चापि तोषयुक्तं तु तत्क्षणात् ॥७६॥
अचिरादेव कालात्तु गर्भचिह्नानि वीक्ष्य तौ ।
त्यागेशस्य प्रसादं तं मन्वानौ मुदमूहतुः ॥७७॥
संपूर्णे दशमे मासि शिशुश्च समजायत ।
उदयाचलमारूढे प्रसन्ने च दिवाकरे ॥७८॥
अविह्वलशरीरां तां सुलग्ने जनितं सुतम् ।
रामब्रह्मा समुद्वीक्ष्य बभूव भृशनन्दितः ॥७९॥
प्रदक्षिणार्चिर्जज्वाल जातवेदाः शुभप्रदः ।
मारुतश्च सुखस्पर्शो मल्लिकासुरभिर्ववौ ॥८०॥
यथावज्जातकर्माणि चक्रे स त्वरयाऽन्वितः ।
दानानि च यथाशक्ति रामब्रह्मा तदाऽकरोत् ॥८१॥

वष्ठे च शिशुः सम्यक्प्रतिपच्चन्द्रदर्शनः ।
त्यागराजप्रसादेन लब्धस्तन्नामकोऽभवत् ॥८२॥
प्रीणयन्स्वगुणै रम्यैः पितरौ भृशतोषितौ ।
अनयत्पञ्च वर्षाणि बालक्रीडासु सक्तधीः ॥८३॥
पाषाणमेकमाहृत्य वदन्विष्णुमुमापतिम् ।
कलशैर्जलमानीय स्नापयत्यनिशं मुदा ॥८४॥
हस्तलब्धैस्तु कुसुमैर्निर्गन्धैरपि सत्वरः ।
आदरादार्चयद्बालो यत्किंचिच्च वदन्वचः ॥८५॥
पुरातनं वा पक्वान्नं तदभावेऽपि तण्डुलान् ।
न्यवेदयत्तदा बालो वासनाबलचोदितः ॥८६॥
स्तम्भताडनसंनद्धं बालं हस्तशलाकया ।
सर्वव्यापीश्वरः सोऽयमित्युक्त्वा स न्यवारयत् ॥८७॥
भक्तिमङ्कुरितां दृष्ट्वा बालस्यास्य महात्मनः ।
संगतास्तोषयामासुराशीर्वचननन्दनैः ॥८८॥
पिताऽपि दृष्ट्वा व्यत्यासं तथा ज्येष्ठकनिष्ठयोः ।
गुणकर्मसु विद्यासु कनिष्ठेऽस्मतात्मजे ॥८९॥
वष्ठे त्यागराजोऽपि पितरौ सुहृदस्तथा ।
तोषयन्बान्धवांश्चापि स्वयं तुष्टो व्यराजत ॥९०॥

॥ इति श्रीसुन्दरेशार्यविरचिते श्रीमत्त्यागराजचरिते
"त्यागराजजननं" नाम चतुर्थः सर्गः ॥

---

## अथ पञ्चमः सर्गः ।

प्राप्ते तु पञ्चमे वर्षे रामभक्तोपदिष्टवान् ।
*अष्टाक्षरं महामन्त्रं विद्यानां प्रथमं स्वयम् ॥१॥*
क्रमेण भाषां गैर्वाणीमुपदिश्य मुदाऽन्वितः ।
गर्भाष्टमोपनीतं तं श्रुतीरग्राहयत्सुधीः ॥२॥

त्यागराजोऽपि तेजस्वी भक्त्याऽग्निमुपासकः ।
अध्यैष्ट साङ्गान्वेदांश्च भिक्षाचर्येण वर्तयन् ॥३॥
अग्रे जातस्तु जप्येशो वृक्षाग्रेषु स मन्दधीः ।
विजहार मदोन्मत्तो वानरैः सह कौतुकात् ॥४॥
कण्ठे रज्जुं निबध्यायं लम्बजिह्वाननं मुदा ।
ग्रामकेसरिणं मूढः कर्षन्याति स्म गर्वितः ॥५॥
बालानताडयद्दीनानयन्भून्बलदर्पितः ।
तिरश्चस्तुः कुकर्माणं जप्येशं पुरवासिनः ।५॥
रामब्रह्मा महात्मा तं कर्तुं सन्मार्गवर्तिनम् ।
कृच्छ्रात्प्रयतमानोऽपि नाशकत्पापनिश्चयम् ॥७॥
जप्येशदुष्कृतिप्राप्तकृच्छ्रः पौरैः पिता तदा ।
बहिष्कृतः कुटुम्बेन संलापाहारवर्जितः ॥८॥
उञ्छवृत्तिमुपादायापोषयद्यः कुटुम्बकम् ।
सर्वैश्च स परित्यक्तः कृच्छ्रात्कालमनीनयत् ।९॥
जप्येशस्यापि दुर्वृत्तं न शान्तिमुपगच्छति ।
स्थलस्याग्यस्य गमनाद्गतिपन्थां न वेद सः ॥१०॥
करस्थमुक्तेर्वल्मीकाश्च गन्तुमपि चोत्सुकः ।
शान्तया च समालोच्य प्रश्चातुं स मनो दधे ॥११॥
सपुत्रजायस्त्यागेशं भक्तबन्धुमनामयम् ।
नत्वा स्तुत्वा भृशं दीनः प्रतीचीं दिशमभ्यगात् ॥१२॥
तञ्जानगरमासाद्य बृहदीश्वरशोभितम् ।
तुलजाख्यमहाराजवर्येण परिपालितम् ॥१३॥
दिनानि कानिचिन्नीत्वा पश्यन्वै देवताः शुभाः ।
अर्थस्यैवोन्नतिं दृष्ट्वा कौबेरीं प्रययौ दिशम् ॥१४॥
क्रोशार्धगमनादेव पुण्यवार्तैस्तु निर्वृतः ।
मोक्षराज्यं समानेतुं दूतैरिव समागतैः ॥१५॥

न ग्लानिमुपगच्छन्तो जग्मुस्ते भृशतोषिताः ।
अदूरादेव तेऽपश्यन्कावेरीं हृदयंगमाम् ॥१६॥
अगाधसलिलां रम्यां सत्रैश्च बहुभिर्वृताम् ।
तुलजावनिपालेन्द्रदानशौण्डत्वदर्शकैः ॥१७॥
पश्चापगानां नाथेन परिशोभितपार्श्वकाम् ।
वेदाध्ययनशीलैश्च भूसुरैर्ब्रह्मचारिभिः ॥१८॥
दुरूहानपि शास्त्रार्थान्बोधयद्भिः परस्परम् ।
गानशास्त्ररतै रक्तकण्ठैश्च बहु शोभिताम् ॥१९॥
प्रीतिमीयुश्च ते दृष्ट्वा पुण्यतोयां कवेरजाम् ।
उत्तरं तीरमासाद्य सर्वे ते न्यवसन्सुखम् ॥२०॥
रामब्रह्मा रमेशस्य गुणान्गायंश्च सुस्वरम् ।
उञ्छवृत्त्या समानीतैर्वर्तयामास तण्डुलैः ॥२१॥
नवागतं शान्तचित्तं महर्षिसमतेजसम् ।
पौराः सर्वे प्रीतिमापुः प्राप्य बन्धुमिव स्वकम् ॥२२॥
पश्चषड्गेहगमनात्प्राप्यासौ भूरितण्डुलान् ।
कुटुम्बं पोषयन्नास्त तर्पयन्ब्राह्मणानपि ॥२३॥
यथालाभं सुसंतुष्टः प्रशान्तात्मा जनप्रियः ।
पूजयन्राघवं देवमनयत्कालमादृतः ॥२४॥
अप्येशस्य शमं यान्ति चेष्टतानि स बाल्यवत् ।
यौवनेन सहैवास्य ववृधे विषयस्पृहा ॥२५॥
परेषां वीक्ष्य रम्याणि गृहाणि ललनाः शुभाः ।
आज्ञाकरांस्तथा वाहान्मात्सर्येणाकुलोऽभवत् ॥२६॥
ताते मातरि वा तस्य कनिष्ठे सोदरेऽपि वा ।
न रतिर्बहुमानो वा सरतो हीनवृत्तिताम् ॥२७॥
अनुभोक्तुं महार्हाणि स्पृहाऽभूत्तस्य दुस्त्यजा ।
प्रारब्धकर्म तु पुनराशां तस्य स कृन्तति ॥२८॥

अनाप्तकामपूर्तिः स कोपमात्सर्यदूषितः ।
दुरहंकारमूढात्माऽनीनयत्कालमार्तिमान् ॥२९॥
त्यागराजं सुतं दृष्ट्वा वेदशास्त्रेषु निष्ठितम् ।
विनीतं साधुशीलं च पितरौ मुदमापतुः ॥३०॥
अधीतसाङ्गवेदं तं सर्वशास्त्रार्थकोविदम् ।
आजन्मसिद्धज्ञानेन गानशास्त्रेषु शोभितम् ॥३१॥
त्रिस्थायिसुगमस्वच्छसुखशारीरसंयुतम् ।
दृढबुद्धिं लये चापि श्रद्दधानं जितेन्द्रियम् ॥३२॥
सोऽण्डिवेङ्कटरामार्यो दृष्ट्वा सुप्रीतमानसः ।
गानशास्त्रेषु विख्यातः शिष्यत्वेनाग्रहीत्स्वयम् ॥३३॥
अचिरेणैव कालेनाप्सरसं भूगतामिव ।
कमलाम्बाभिधां कन्यामुपयेमे गुणोज्ज्वलाम् ॥३४॥
जप्येशोऽपि स्वयं गृह्णन्स्वगुणस्यानुरूपिणीम् ।
कान्तां कामवशो हृष्टस्तुतोष मदविह्वलः ॥३५॥
विप्रेभ्यस्तु तदा राजा प्रादाद्गेहशतं मुदा ।
ग्राहितः सोऽपि तेष्वेकं कृच्छ्रात्तद्गुणतोषिभिः ॥३६॥
त्यागराजेन पुत्रेण स्नुषया भार्ययाऽपि च ।
वसन्सुरुचिरं कालं रामब्रह्माऽन्वगाद्दिवम् ॥३७॥
शान्ता च सह पुत्राभ्यां भर्तुर्विरहविह्वला ।
दूयमाना भृशं साध्वी कृच्छ्रात्कालमनीनयत् ॥३८॥
अदीर्घेणैव कालेन शान्ता च त्रिदिवं ययौ ।
भर्तुर्विरहसंजातासह्यवेदनया सती ॥३९॥
जप्येशस्त्यागराजश्च पितुर्मरणजां व्यथाम् ।
व्यपोहन्तौ च मात्राऽपि रहितौ भृशविह्वलौ ॥४०॥
त्यागराजोऽचिरादेव वैराग्येण च विद्यया ।
लोकस्वभावज्ञानेन शान्तचित्तो बभूव ह ॥४१॥

पित्रोर्मरणजं दुःखं नियच्छन्नात्मनाऽपि सः ।
न शशाक तु तत्सोढुं जप्येशाज्ञानसंभवम् ॥४२॥
स विव्यथे त्यागराजो ज्येष्ठस्य विषमैर्गुणैः ।
उपदेशाद्धर्ममानैराज्यसेकैस्तु वह्निवत् ॥४३॥
विषयेष्वेव संसक्तं दुःशीलं चेन्द्रिये रतम् ।
अनिवार्यं च तं दृष्ट्वा विभक्तं तं व्यधात्सुधीः ॥४४॥
गृहकोणं तथा रामं परिवारैः समावृतम् ।
परंपरागतं प्राप्य त्यागराजो मुमोद च ॥४५॥
स्वाकार्यकरणे विघ्नमाचरन्तं तु सोदरम् ।
परित्यज्य सपत्नीको जप्येशोऽपि ननन्द सः ॥४६॥
त्यागराजस्तु धर्मात्मा षोडशे वयसि स्थितः ।
संप्राप्तयौवनोऽप्यार्ये वर्त्मन्येव स्थिरोऽभवत् ॥४७॥
प्राप्याल्पं पैतृकं द्रव्यं गृहकोणे वसन्नपि ।
पैतामहानां लाभेन विग्रहाणां मुमोद सः ॥४८॥
ब्राह्मे मुहूर्ते चोत्थाय कावेर्याः सलिले शुचिः ।
मन्त्रवन्नियतः स्नात्वा राघवं पर्युपास्त सः ॥४९॥
संपूज्य विधिवद्राममामध्याह्नं दृढव्रतः ।
अपराह्णे तु शास्त्राणि गानादीन्यपठत्सुधीः ॥५०॥
उपास्य संध्यां सायाह्ने दृष्ट्वा पञ्चनदेश्वरम् ।
अलंकृतस्य रामस्य संनिधौ गायति स्म सः ॥५१॥
संगीतशास्त्रनैपुण्यं शारीरसुखसंपदम् ।
श्रुत्वा तु विस्मिताः सर्वे संघशस्तत्र संययुः ॥५२॥
सायंसंध्यावसाने तु नूतनाश्च शताधिकाः ।
संगताः परमप्रीताः श्रोतुं तद्गानमुत्तमम् ॥५३॥
दिने दिने तु ववृधे संघस्तत्पुरवासिनाम् ।
गातुं वितर्दिकायां स यन्त्रितः सकुतूहलैः ॥५४॥

त्यागराजश्च संतुष्टो गानं स्वं श्रोतुमागतान् ।
तर्पयामास मधुरैर्गीतैः शास्त्रानुगामिभिः ॥५५॥
अचिरेणैव कालेन ग्रामेषु नगरेषु च ।
व्याप्ता तत्कीर्तिरमला तांश्चानीनयदत्र तु ॥५६॥
ग्रामीणान्नागरान्दृष्ट्वा स्वगानश्रवणोत्सुकान् ।
उपचर्य यथाशक्ति मुदितस्ताननन्दयत् ॥५७॥
संपूजयन्रामचन्द्रं गीतैः मैस्तोषयन्पुरम् ।
विस्तारयन्कीर्तिमालामुवास सह भार्यया ॥५८॥
सोऽपि वेङ्कटरामोऽपि गुरुस्तद्गानविस्मितः ।
आत्मोत्कृष्टं च तं मत्वा साधुशीलस्तुतोष ह ॥५९॥
अध्यापनं च तत्याज त्यागेशस्य तदा गुरुः ।
शिष्यानध्यापयामास त्यागराजेन चादरात् ॥६०॥
एवं गतेषु कालेषु परं वर्षद्वयात्पुनः ।
स्नात्वा हुताग्निः श्रीराममास्ते संपूजयन्मुदा ॥६१॥
विमाने चित्रसंयुक्ते मुक्तामणिविचित्रिते ।
स्वासने राघवं न्यस्य परिवारसमावृतम् ॥६२॥
कावेरीपुण्यतोयेन स्नानीतेनाभिषिच्य च ।
सुगन्धिकुसुमैश्चैव भूषयन्वर्तते स्म सः ॥६३॥
पार्श्वद्वये नवा दीपा लम्बमानास्तु पञ्चपाः ।
प्रभया स्पृहणीयाश्च शोभयन्ति स्म मण्डपम् ॥६४॥
रामादयस्तु ते शिष्याः शुश्रूषन्ते स्म सादरम् ।
रचयन्तश्च मालास्ते चन्दनानि विधाय च ॥६५॥
तदा ससंभ्रमं द्वास्थः शिष्योऽन्तः समुपागतः ।
आवेदयामास नतः प्राप्तं ब्राह्मणमुत्तमम् ॥६६॥
त्यागराजस्तु संहृष्टो बहिरेत्य सकौतुकम् ।
अपश्यद्भूसुरं कंचिन्महर्षिसमतेजसम् ॥६७॥

ऊर्ध्वपुण्ड्रं दधानं च विशाले फालपट्टके ।
तुलसीकाष्ठमालाश्च धारयन्तं गले शुभाः ॥६८॥
अक्षसूत्रं करे धृत्वा साङ्गुष्ठाग्रनिपीडितम् ।
ददर्श मूर्तिमन्तं तं रामभक्तिमिवागतम् ॥६९॥
दृष्ट्वा सुप्रीतहृदयो नत्वा च विनयान्वितः ।
अन्तस्तमानिनायासौ पूजयन्वचनैः शुभैः ॥७०॥
न्यासने समुपविश्य पाद्याचमनतोषितम् ।
विनीतः पार्श्वमातिष्ठंस्त्यागराजोऽब्रवीदिदम् ॥७१॥
कृतकृत्योऽस्म्यहं ब्रह्मन्भवन्तं प्राप्य मद्गृहे ।
समागमस्तु साधूनां महापुण्यफलोद्भवः ॥७२॥
मन्ये भवन्तं श्रीरामो मदनुग्रहकारणात् ।
प्रैषयद्दयया नूनमन्यथा संभवः कथम् ॥७३॥
अपि श्रान्तो न भगवन्दूरमार्गपरिक्रमात् ।
किमर्थमागतश्चात्र किं वाऽद्य करवाण्यहम् ॥७४॥
एते च शिष्याः संयत्ता भवच्छुश्रूषणे स्वयम् ।
विधेयश्चास्मि भवत आज्ञापय यथेप्सितम् ॥७५॥
इत्युक्तस्त्यागराजेन प्रीत्या च विनयेन च ।
बभाषे मधुरं वाक्यं ब्राह्मणः स मृदुस्मितः ॥७६॥
त्यागराज महाभाग रामब्रह्मसुते त्वयि ।
सौशील्यं च विनीतिश्च नेदमाश्चर्यकारणम् ॥७७॥
त्वं तु पौत्रो महार्हस्य गिरिराजकवेस्तु यः ।
भक्तिकीर्तनतुष्टेन शाजिराजेन पूजितः ॥७८॥
तुष्यामि च त्वया विद्वञ्शास्त्रनिश्चितबुद्धिना ।
भक्त्या त्वनर्घया रामे पूर्वपुण्येन चाप्तया ॥७९॥
श्रुत्वा त्वदीयं पाण्डित्यं शास्त्रेषु निखिलेष्वपि ।
तथा गान्धर्ववेदे च दुरापमितरैः पुनः ॥८०॥

शास्त्रानुसारिकर्माणि सौशील्यं सत्यसंधताम् ।
भक्तिं चानुपमां रामे त्वां दिदृक्षुरिहागतः ॥८१॥
काञ्चीपुरादागतोऽस्मि वरदेशविभूषितात् ।
न किंचिन्मम कर्तव्यं न मे वाञ्छाऽस्ति वस्तुषु ॥८२॥
कथं पूजयसे रामं केन मन्त्रेण वा पुनः ।
मन्त्ररूपं मन्त्रगम्यं मन्त्राराध्यमथादरात् ॥८३॥
इति पृष्टो ब्राह्मणेन सुरर्षिसमतेजसा ।
उवाच वचनं मन्दं त्यागेशः सत्यसंगरः ॥८४॥
गायत्र्येव मया प्राप्ता सकाशाज्जनकस्य मे ।
जपामि सततं तां वै न जाने त्वितरत्पुनः ॥८५॥
प्रयच्छतु महाभागो यद्यन्यो मन्त्र उत्तमः ।
यं जपन्नियतो नित्यं श्रेयः परमवाप्नुयाम् ॥८६॥
येन प्रीतिमवाप्नोति राघवः सहलक्ष्मणः ।
तं ममाचक्ष्व मन्त्रं तु पुण्यं श्रद्धान्वितस्य मे ॥८७॥
वृणे भवन्तमाचार्यं शिष्योऽहं शिष्यवत्सल ।
इत्युक्त्वा प्रणनामासौ पादयोर्भक्तिसंयुतः ॥८८॥
संप्रेषितस्तु श्रीशेन काञ्चीपुरनिवासिना ।
ब्राह्मणो भृशसंतुष्टस्त्यागेशविनयेक्षणात् ॥८९॥
अथोवाच मुदा युक्तस्त्यागेशं पुरतः स्थितम् ।
भद्रमस्तु महाभाग मन्त्रं दास्याम्यनुत्तमम् ॥९०॥
यं शिवायै पुरा तुष्टः प्रेयस्यै शंकरः प्रभुः ।
रहस्युपादिशन्मन्त्रं येन सा च शुभान्विता ॥९१॥
तारयत्युपदिश्यैतं महापापानपीश्वरः ।
काशीक्षेत्रगतान्सर्वांस्तं गृहाण दृढव्रत ॥९२॥
इत्युक्त्वा श्रोत्रयोस्तस्य मन्त्रं पूतमुपादिशत् ।
तारकं सर्वपापेभ्यस्तारकं नाम नामतः ॥९३॥

उपदिष्टो ब्राह्मणेन सुप्रीतहृदयेन च ।
दृष्ट्वेव राघवं साक्षात्त्यागेशो मुदमावहत् ।९४॥
पुलकाञ्चितसर्वाङ्गः शीताश्रुभृतलोचनः ।
त्रिस्तं प्रदक्षिणीकृत्य ववन्दे नियतो गुरुम् ॥९५॥
अथोवाच गुरुं दीप्तं ब्राह्मणं पुरतः स्थितम् ।
ब्रह्माणमिव तेजोभिर्ज्वलन्तं मुदितस्तदा ॥९६॥
धन्योऽस्मि भूसुरश्रेष्ठ स्वयमागत्य यत्तु मे ।
पथिकस्येव पाथेयं वितीर्णं तारकं विभो ॥९७॥
महोपकारकर्तुस्ते किं करिष्येऽल्पसंचयः ।
प्रणामेनाद्य संतुष्टस्त्वनुगृह्णीष्व मां पुनः ॥९८॥
ततः प्रोवाच विप्रेन्द्रस्त्यागराजं तपोधनम् ।
मा विषादं गमः शिष्य गुरुदक्षिणयाऽप्यलम् ॥९९॥
नाहं स्वर्णचयैर्नापि तुष्येयं राज्यदानतः ।
यथा गुरुवचः कर्तुः श्रद्धया नियमेन च ॥१००॥
उपदिष्टं महामन्त्रं जप नित्यमतन्द्रितः ।
पञ्चविंशतिसंयुक्तशतसाहस्रकं स्वयम् ॥१०१॥
इत्थं जप महाभाग कोटीः षण्णवतिं पुनः ।
ततो द्रक्ष्यसि साश्चर्यं तत्फलं भक्तपुंगव ॥१०२॥
इत्यादिश्य प्रियं शिष्यं प्रतस्थे भूसुरस्तदा ।
याचितोऽप्यनुगैरार्तैर्न मोक्तुं स मनो दधे ॥१०३॥
गत्वा सुदीर्घं ते श्रान्ता अनवाप्य मनोरथम् ।
अदृश्यं भूसुरं ज्ञात्वा न्यवर्तन्त समाकुलाः ॥१०४॥
भूसुरस्य स्वरूपेण स्वयं रामः समागतः ।
अन्यथा कथमस्मासु पश्यत्स्वन्तर्दधे स्वयम् ॥१०५॥
अहो तेजश्च कारुण्यं सूनृतप्रियवक्तृता ।
अहो जन्तुषु वात्सल्यमित्यूचुर्विस्मिता जनाः ॥१०६॥

त्यागराजः स्वयं गत्वा सुदीर्घं घर्मतापितः ।
समाहूय चिरायोचैरनवाप्तोत्तरोऽगमत् ॥१०७॥
प्रत्यागम्य गृहं दीनो गुरोर्विरहविह्वलः ।
मन्त्रोपदेशतुष्टोऽपि विषसाद महामतिः ॥१०८॥
आश्वासितः सुहृद्भिश्च शिष्यैश्च विनयान्वितैः ।
उपदिष्टं महामन्त्रं जजाप प्रभुसंनिधौ ॥१०९॥
आवर्तयद्वशी नित्यं नित्यं यथोक्तं च पुराविदा ।
पञ्चविंशतिसाहस्रं शतसाहस्रसंयुतम् ॥११०॥
आराधयन्रामचन्द्रं शिष्यानध्यापयन्नपि ।
जपंश्च तारकं मन्त्रं गमयामास वत्सरान् ॥१११॥

इति श्रीसुन्दरेशार्यविरचिते श्रीत्यागराजचरिते "मन्त्रोपदेशो" नाम पञ्चमः सर्गः ॥

---

## अथ षष्ठः सर्गः ।

जजाप स महातेजास्त्यागेशः श्रद्धयाऽन्वितः ।
एकविंशतिमब्दान्वै मन्त्रं तं तारकं स्वयम् ॥१॥
परिचर्यं रघूत्तमसमामध्याह्ने दृढव्रतः ।
अपराह्ने च नियतो मन्त्रमावर्तयद्वशी ॥२॥
जपता तेन संप्राप्तं तेजश्च सुदुरासदम् ।
निग्रहानुग्रहे शक्तिर्या लभ्या योगिभिर्वरैः ॥३॥
योगीव शुशुभे दीप्तस्त्यक्तसर्वपरिग्रहः ।
पश्यंश्च निखिलाँल्लोकान्रघूत्तममयान्मुदा ॥४॥
निरवधं सुखं तस्मिन्ननुभूय जपे सुधीः ।
निशास्वपि च शान्तासु शान्तचित्तो जजाप तम् ॥५॥
एवं जपपरो नित्यं राघवं मनसीडयन् ।
ध्यानयोगमुपागत्य स्थाणुवन्न चचाल सः ॥६॥

ब्राह्मेषु च मुहूर्तेषु बोधितः शिष्यपुंगवैः ।
कावेरीमन्वगात्तुष्टो रामनाममनुं स्मरन् ॥७॥
स्नात्वा हुताग्निस्तं जप्त्वा यथाकालं यथाविधि ।
पूजां रामस्य विधिवत्कृत्वा कालमनीनयत् ॥८॥
एकदा संगवे काले संतुष्टहृदयः स्वयम् ।
पुरातनानि पुष्पाणि व्यपाकर्तुं कृतोद्यमः ॥९॥
विमानस्य पुरः स्थित्वा यावत्पश्यति राघवम् ।
लावण्यस्य परीवाहं सद्यो जातं ददर्श सः ॥१०॥
आश्चर्यवदपश्यच्च विस्मयस्तिमितेक्षणः ।
अदृष्टपूर्वां तां शोभां पश्याम्यद्य कथं न्वहम् ॥११॥
अहो रूपस्य माधुर्यं सभ्रातू राघवस्य मे ।
दृष्टिं च हृदयं चाद्य विवशीकृत्य कर्षति ॥१२॥
विमानमपि नूत्नं मे प्रतिभाति किमद्य च ।
कथं ज्वलति पक्ष्माणि दिधक्षदिव तेजसा ॥१३॥
छात्राश्च क्व गतास्त्वद्य परिचर्यापरायणाः ।
सर्वमाश्चर्यभूतं मे मनश्च परितुष्यति ॥१४॥
इत्येवं चिन्तयन्धीमान्कौतुकाक्रान्तमानसः ।
पश्यन्नेव रघूत्तंसं बभूवानिमिषेक्षणः ॥१५॥
ससंभ्रमस्तदाऽपश्यत्सद्यो जातं मनोहरम् ।
नीलकान्तिप्रवाहं स व्याप्तं सर्वत्र भूरिशः ॥१६॥
कान्तिवन्नीलचन्द्रस्य गृहान्तरुदितां प्रभाम् ।
अदृष्टपूर्वां संप्रेक्ष्य स विस्मयमुपागमत् ॥१७॥
क्षणादपश्यत्त्यागेशो बालकद्वितयं तदा ।
परिणामेन रूपेण हरन्तमिव चक्षुषी ॥१८॥
काकपक्षेषु विन्यस्तमन्दारसुमशोभितम् ।
फालविन्यस्तकस्तूरीतिलकेन सुभूषितम् ॥१९॥

भ्रुण्णद्भर्शां चक्षुषी दीप्तकुण्डलाभ्यामलंकृतम् ।
मुखकान्तिसमाधूतराकाहरिणलाञ्छनम् ॥२०॥
नवमौक्तिकवैदूर्यमालाभिरुरशोभितम् ।
धारयन्तं च वलयान्कटकान्यङ्गदानि च ॥२१॥
परार्घ्यचन्दनेनाक्तं महार्घवसनान्वितम् ।
नूपुरैरनुरूपैश्च भूषितं चरणे पुनः ॥२२॥
वयसा द्वादशं दिव्यतेजोयुक्तमरिंदमम् ।
हरन्तं दृष्टिचित्तानि कंदर्पसमविग्रहम् ॥२३॥
वामे भुजंगभोगाभे हस्ते कृत्वा शरासनम् ।
बाणं दक्षिणहस्तेन धरन्तमरिमर्दनम् ॥२४॥
मन्दस्मेरमुखेनापि दृशा कारुण्यपूर्णया ।
स्वस्याभिमुखमास्थाय परानुग्रहकारिणम् ॥२५॥
चिरं पश्यन्नपि श्रीमान्नेत्रैरनिमिषैरिव ।
न किंचिज्ज्ञातवांस्तत्र स्तब्ध एव व्यतिष्ठत ॥२६॥
तौ कुमारावपि स्तब्धौ मपश्यन्तावतिष्ठताम् ।
नीलकार्तस्वराभाभिः पूरयन्तौ चतुर्दिशः ॥२७॥
बोधं प्राप्य तु विज्ञाय रामं लक्ष्मणमागतम् ।
संभ्रमेण यदा नन्तुं संयतस्तौ तिरोहितौ ॥२८॥
तिरोभूते तु कान्त्योघे तिमिरेण च संवृते ।
उत्तम्य संभ्रमात्पश्यंस्त्यागेशो मोहमाययौ ॥२९॥
गाढान्धकारमग्नं तद्वीक्ष्य गेहं भृशाकुलः ।
राघवं लक्ष्मणं चैव तत्र तत्र स मार्गति ॥३०॥
गृहाङ्गणेषु मुख्येषु तथैवान्तर्गृहेषु च ।
गृहाद्बहिश्च पर्यन्ते विह्वलोऽमार्गयत्प्रभुम् ॥३१॥
त्वरमाणश्च वीथीषु चाह्वयन्रामलक्ष्मणौ ।
अदृष्ट्वा पुनरायासीद्विह्वलः साश्रुलोचनः ॥३२॥

गृहं पुनः प्रविश्याशु मार्गित्वा राघवं प्रभुम् ।
अपश्यंस्तत्र दीनात्माऽद्रवदन्यत्र सादरम् ॥३३॥
स्वातन्त्र्यमत्र रामेण लक्ष्मणेनेति च ब्रुवन् ।
तत्र तत्र चरन्नाममनासाद्य न्यवर्तत ॥३४॥
शिष्यान्पप्रच्छ वीरो मे क्व रामो लक्ष्मणो विभुः ।
तावद्य तु समायातौ पश्यन्तः किं न शंसथ ॥३५॥
पृच्छन्द्रवति वीथीषु क्व राम इति संगतान् ।
विषीदंश्च प्रमत्तश्च विह्वलश्चावशः स्वयम् ॥३६॥
उन्मत्तं तं तु पश्यन्तः केचिज्जहसुरञ्जसा ।
विषेदुश्च पुनः केचित्तस्य चित्तविपर्ययात् ॥३७॥
शिष्याश्च विह्वलास्तस्य कारणं शोकमोहयोः ।
अजानन्तोऽन्वयुः सर्वे प्रष्टुं तं चाप्यनीश्वराः ॥३८॥
त्यागेशोऽपि स धर्मात्मा मार्गयन्सुचिरं तदा ।
अनासाद्यैव तौ वीरौ विह्वलः स्वगृहं ययौ ॥३९॥
व्यजनैर्वीजयामासुर्दृष्ट्वा तद्देहसंक्रमम् ।
शिष्यास्ते दीनमनसो गुरुमोहेन कातराः ॥४०॥
विश्रान्तं तं पतिं साध्वी विमला कमलाम्बिका ।
पप्रच्छ सादरं पार्श्वे तिष्ठन्ती साश्रुलोचना ॥४१॥
नाथ किं न प्रमत्तोऽसि न ज्वरो बुद्धिमोहकः ।
यत्कारणतो मूढश्चरसीत्थं ससंभ्रमः ॥४२॥
भवदायत्तमस्त्यद्य शिष्याणां मम च प्रभो ।
मानः सौख्यं तथा प्राणाः किं कुर्मः कृपणा वयम् ॥४३॥
पश्यत्वद्य भवाञ्छिष्यान्स्वेदक्लिन्नमुखाम्बुजान् ।
भयेन च विषादेन व्याकुलान्दीनचेतसः ॥४४॥
कथं भवानिमां प्राप्तोऽवस्थामिनरदुःसहाम् ।
यन्मूलं तद्वदतु मे मार्यायै भवतः प्रभो ॥४५॥

इत्युक्तः स तु धर्मात्मा प्रेयस्या भृशतान्तया ।
सर्वानुदीक्ष्य तान्दीनान्दीनः प्रोवाच विह्वलः ।४६॥
ज्वराभिभूतो नास्म्यद्य प्रमत्तो मूढधीरपि ।
लज्जया पुनराविष्टो यदद्यापि धराम्यसून् ॥४७॥
राघवो लक्ष्मणश्चैव साक्षादत्र समागतौ ।
मयि नन्तुं कृतोद्योगे क्षणादन्तर्धिमापतुः ॥४८॥
भ्रातरौ रूपसंपन्नौ हैममारकतच्छवी ।
स्पृहणीयतमौ वीरौ चन्द्रवत्प्रियदर्शनौ ॥४९॥
यथैवालंकृतौ मात्रा तुष्टया प्रियपुत्रया ।
विश्वामित्रानुगमने तथा दृष्टौ मया त्विह ॥५०॥
प्राप्तावपि महात्मानौ प्राप्यौ भूरितपोबलैः ।
पश्यन्नेवानयं कालं मोहविह्वलमानसः ॥५१॥
न मया स्वागतं प्रोक्तं न दत्तं पाद्यमप्यहो ।
नाप्युपवेशितौ पीठे न च क्षीरं निवेदितम् ॥५२॥
निरुद्धोऽहं दुष्कृतौघैः पूर्वजन्मकृतैः स्वयम् ।
धिगासाद्यापि दुष्प्रापौ व्यर्थं मां बिभ्रतं वपुः ॥५३॥
अनुभूय च तां देवीं रुचिरां रूपसंपदम् ।
प्रनष्टायां कथं तस्यां जीवाम्यद्येति विस्मये ॥५४॥
लज्जा कृन्तति चात्मानं प्राप्य दुर्लभदर्शनम् ।
न पूजितो न प्रणतो न च भाषित इत्यपि ।५५॥
तिष्ठेतां मानिनौ शूरौ कथमस्वागते गृहे ।
अपश्यंस्तौ महात्मानौ नाहं जीवितुमुत्सहे ॥५६॥
इत्युक्तवन्तं त्यागेशं परिम्लानमुखाम्बुजम् ।
शुष्कोष्ठं साश्रुनेत्रं च शयानं च महीतले ।५७॥
स्वेदधारापरिक्लिन्नगात्रसं दीनचेतनम् ।
गोहत्यामिव कामेन कृत्वा विप्रं सुवापितम् ॥५८॥

उदीक्ष्य सर्वे संहृष्टा रामदर्शनकौतुकात् ।
विषीदन्तश्च तद्देहसंदष्टक्रमविह्वलाः ॥५९॥
ततः शिष्याश्च संहृष्टाः साध्वी च कमलाम्बिका ।
ऊचुर्विनयसंपन्नास्त्यागेशं भृशविह्वलम् ॥६०॥
नायं विषादकालस्तु दृष्टौ साक्षाद्धि राघवौ ।
अगम्यौ श्रुतिभिश्चापि ध्यानयुक्तैर्महर्षिभिः ॥६१॥
शोच्या वयं पुनर्नाथ सर्वदाऽत्रैव सुस्थिताः ।
तयोः समागमे प्राप्ते यतो दृग्दपोहिताः ॥६२॥
स्पृहणीयो भवान्नूनं दृष्टौ यन्नरपुंगवौ ।
उत्तिष्ठतु भवानद्य पूजाकालो विलम्बते ॥६३॥
इत्युक्तस्तु समालोक्य सूर्यमाकाशमध्यगम् ।
माध्याह्निकक्रियाहेतोरुदतिष्ठत्त्वरान्वितः ॥६४॥
स्मरन्नेव तयो रूपं गाम्भीर्यं स्पृहणीयताम् ।
अलंकारविशेषं च माध्याह्निकमथाकरोत् ॥६५॥
आरब्धा तु यदा पूजा तद्गृहं बहुभिर्वृतम् ।
श्रुतवद्भी रघूत्तमौ प्रत्यक्षं दृष्टवानिति ॥६६॥
त्यागेशस्तांस्तु संदृश्य बहुमानेन कौतुकात् ।
प्रियान्मानयतः सर्वान्विनयेन ननाम सः ॥६७॥
पूजां विधाय रामस्य जने पश्यति विस्मिते ।
अगायत्स कृतिं कृत्वा चेला नीदय राह्निति ॥६८॥
सद्यः कृतं तु तद्गीतं श्रुत्वा ते विस्मयान्विताः ।
रामानुग्रहभाजं तं श्लाघन्ते स्म प्रहर्षिणः ॥६९॥
शिष्याश्च परमप्रीता नवकल्प्तां कृतिं तु ताम् ।
कृत्वा मनःसमारूढां गायन्ति स्म महौजसः ॥७०॥
गुरुश्च त्यागराजस्य श्रुत्वैतां कृतिमुत्तमाम् ।
बहुमानेन चानाय्य तुष्टस्तमिदमब्रवीत् ॥७१॥

त्यागेश कृतकृत्योऽस्मि शिष्यं त्वां प्राप्य धार्मिकम् ।
कीर्तिश्च भविता लोके त्वयैव मम सुव्रत ।७२॥
प्रत्यक्षेण त्वया दृष्टावित्यद्यैव श्रुतं मया ।
शरण्यौ सर्वलोकानां राघवौ रिपुमर्दिनौ ॥७३॥
कृतं त्वया महत्पुण्यमितरेषां सुदुष्करम् ।
येन प्रेक्षितवान्रामं योगिनामपि दुर्लभम् ।।७४॥
श्रुता कृतिस्त्वदीया च भक्तिपूता मनोरमा ।
सर्वलक्षणसंयुक्ता गीता ते शिष्यपुंगवैः ॥७५॥
महत्खलु त्वया लोकः शुभमासादयिष्यति ।
कुरु गीतानि रम्याणि गान्धर्वस्य विवृद्धये ॥७६॥
इत्युक्तस्त्यागराजस्तु गुरुणा च हितैषिणा ।
प्रणम्य च तथेत्याह विनयेन मुदाऽन्वितः ।७७॥
सदा स्मरति तं रामं लक्ष्मणं च समागतम् ।
परिणामं तथा कान्तिं ध्यायन्नन्दति चासकृत् ॥७८॥
विषीदति कदाचिच्च तिरोधानं स्मरन्पुनः
क्रन्दत्युच्चैर्वदन्रामलक्ष्मणौ क्व गताविति ॥७९॥
ससंभ्रमश्च जागर्ति सुप्तो रामेति च ब्रुवन् ।
दृष्ट्वा शून्यं गृहं पृच्छत्यथ रामः क्व वेति च ।८०।
शून्येऽपि गेहे दृष्ट्वेव राघवं सहलक्ष्मणम् ।
स्मेरः पश्यन्विशालेन लोचनेन स मोदते ।।८१।।
रामदर्शनमारभ्य व्यत्यस्तास्तस्य तु क्रियाः ।
न सुप्ते वा स्वपिति वा प्रमत्त इव दृश्यते ॥८२॥
गुरोराज्ञां वहन्धीमाञ्छिरसा कृतवान्स्वयम् ।
कीर्तनानि महार्हाणि शतसाहस्रकाणि च ।८३॥

॥ इति श्रीसुन्दरेशार्यविरचिते त्यागराजचरिते
'रामदर्शनं' नाम षष्ठः सर्गः ॥

# अथ सप्तमः सर्गः ।

ब्राह्मे मुहूर्ते चोत्थाय स्नात्वा जप्त्वा कृताह्निकः ।
राघवं बोधयत्यार्यो निशायां सुप्तमर्चितम् ॥१॥
देशाक्षीदेवगांधारीभूपालैश्च वसन्तया ।
बिलहर्यादिभिर्गीतैः कलैस्तं प्रत्यबोधयत् ॥२॥
निवेदयति गोक्षीरमेलामिश्रं सुवासितम् ।
गीतानि स्वकृतान्येष त्वामभ्यार्द्ध च गायति ।३॥
त्यागेशे गायति मुदा संयस्तत्पुरवासिनाम् ।
पुरान्तरागतानां च तुमुलः समजायत ॥४॥
सभाजयित्वा तान्सर्वान्संमान्य च यथार्हतः ।
नवानि कृत्वा गीतानि गायति स्म मुदाऽन्वितः ॥५।
दुरूहानपि शास्त्रार्थान्बोधयन्निजकीर्तनैः ।
सर्वांश्च विवशीकृत्याकरोत्साधुपथे स्थितान् ॥६॥
पारम्यं भक्तियोगस्य तन्मार्गान्विविधांश्च सः ।
विषयीकृत्य गीतानि चकार मतिमांस्तदा ॥७॥
देवतानां महत्त्वं च शिवादीनां दृढव्रतः ।
कीर्तनेषु निधायासौ प्रकटीकुरुते स्म सः ॥८॥
रामचन्द्रस्य वैशिष्ट्यं दैवतेष्वितरेष्वपि ।
शरण्यतां च लोकस्य सौलभ्यं प्रियवकृताम् ॥९॥
सत्यसंगरतां चैव सौशील्यं नम्रभावताम् ।
रूपोत्कर्षं च रामस्यावर्णयत्कीर्तनेषु स ।१०॥
पाषण्डा अपि तच्छ्रुत्वा विस्मिता गानलोलुपाः ।
रामे च परमां भक्तिं प्राप्य पूताश्चकाशिरे ।११॥
उपदिश्य महामन्त्रं तारकं तारकं स्वयम् ।
अतारयच्च तान्सर्वांस्तारापतिसमस्तदा ॥१२॥

माध्यंदिनानि सर्वाणि कृत्वा कर्माणि शास्त्रवत् ।
राघवं पूजयामास श्रद्धया नियमेन च ॥१३॥
छात्रानध्यापयामास स्वाः कृतीर्भोजनात्परम् ।
अपराह्णे तु शुद्धात्मा विश्रान्तिमनपाश्रयन् ॥१४॥
पुराणानि च सायाह्ने यथावद्वक्ति संगतान् ।
निर्वर्त्य सायंसंध्यां च तारकं जपति स्म सः ॥१५॥
रामपूजां ततः कृत्वा बहुसंघे समाकुले ।
गायति भणतो रामं नैशरागकृताः कृतीः ॥१६॥
संलीयमानमनसः सर्वे नादे सुखात्मके ।
न किंचिज्ज्ञातवन्तस्ते कुत्र च क स्थिता इति ॥१७॥
त्यागेशो मानसं वाचमर्पयन्राघवे दृढम् ।
अविज्ञाय च यत्किंचिदानिशान्तं स्म गायति ॥१८॥
बोधितः शिष्यवर्गेण स्नापयित्वा रघूत्तमम् ।
सुखस्वप्नकरैर्गीतैः कावेरीं याति सादरम् ॥१९॥
गीतानां च सम दृष्ट्वा रम्यतां भावपूर्णताम् ।
भावानुसारिणो रागांस्तालांश्च विविधानपि ॥२०॥
अमन्यन्त महात्मानं लोकमेनमुपागतम् ।
तुम्बुरुं वायुसूनुं च गान्धर्वस्य विवृद्धये ॥२१॥
सायाह्ने शिष्यवर्गाणां संगतानां च भक्तितः ।
भक्त्युत्कर्षं प्रवक्ष्येतच्छास्त्राब्धिमथनोत्थितम् ॥२२॥
वाञ्छन्ति प्राणिनः सर्वे सौख्यं दुःखविहीनताम् ।
यतन्ते तदवाप्त्यर्थं प्रपद्यन्ते न तत्पुनः ॥२३॥
संपूर्णसुखलाभाय कृषिवाणिज्यकारकाः ।
आधिव्याधिशतं प्राप्य पीड्यन्ते तेन चैव हि ॥२४॥
यतमानो न चाप्नोति सुखसुप्तस्तु विन्दति ।
कृच्छ्रात्संपादयत्येकोऽन्नुभुङ्क्ते तत्पृथग्जनः ॥२५॥

निरुद्यमास्तथा मूढाः कातराः कलुषेन्द्रियाः ।
राज्यानि च समासाद्य लभन्ते सर्वपूज्यताम् ॥२६॥
धीराश्च कृतविद्याश्च कुलजाता जितेन्द्रियाः ।
सेवकत्वमनुप्राप्य परिचर्यां हि कुर्वते ॥२७॥
ऊहनीयं त्वनेनैव विद्यते शक्तिरित्यपि ।
अदृश्या सूक्ष्मभूतत्वान्मानुषाद्बलवत्तरा ॥२८॥
सा हि नारायणी शक्तिर्व्याप्य सर्वत्र तिष्ठति ।
नयन्ती सर्वलोकांश्च शुभाशुभफलप्रदा ॥२९॥
तस्मान्नारायणः सेव्यः शुभमाकाङ्क्षता पुनः ।
भक्तिपूतेन मनसा लोकानां यः परा गतिः ॥३०॥
त्रिलोकीसृष्टिकर्तारं तर्पयेत्कथमल्पकः ।
भवत्यंवानर्घया साध्यस्तुष्टो भवति सोऽनया ॥३१॥
फलं समीक्षमाणस्तु भक्तिं यत्कुरुते नरः ।
वाणिज्यमिति वाच्यं तन्न सा भक्तिरिहोच्यते ॥३२॥
वाणिज्ये तु समं मूल्यं दत्त्वा वस्तु हि लभ्यते ।
अल्पादल्पं प्रदायाशु महद्धि यतते जनः ॥३३॥
यः पूजयति तं देवं कामनावशगो नरः ।
प्रलोभयति दुष्टात्मा स्वात्मानं तं च केशवम् ॥३४॥
इदमाश्चर्यभूतं मे प्रार्थयत्यखिलो जनः ।
देवान्दूरगतान्सर्वव्यापिनो निर्णयन्किल ॥३५॥
शक्तिमत्तां च देवानां स्वकार्यकरणे पुनः ।
निश्चिन्वन्नेव मनसि प्रार्थयत्यत्र मानवः ॥३६॥
सर्वव्यापी सर्वशक्तः कथमस्याल्पदानतः ।
प्रीतिं तु परमां प्राप्य भूरि दातव्यमित्यपि ॥३७॥
अहो वयं मूढधियो मोक्षसाम्राज्यदायकम् ।
आराध्य काचं याचामः गर्दभं कौस्तुभाय वा ॥३८॥

इत्यादिभिर्महावाक्यैर्युक्तियुक्तैर्महामतिः ।
पाषण्डानपि साधून्स भक्तांश्च कुरुते दृढम् ॥३९॥
एकदा त्यागराजः स कृत्वा माध्याह्निकीं क्रियाम् ।
यतमानश्च पूजायै वृद्धं विप्रं ददर्श सः । ४०॥
आयातं दीर्घमध्वानं स्वेदक्लिन्नकलेवरम् ।
पाण्डुरक्षौमसंवीतं रुद्राक्षावृतकंधरम् ॥४१॥
श्वेतमूर्धजसंश्लक्ष्णनागाभरणभूषितम् ।
सर्वगात्रेषु संलिप्तविभूतिपरिमण्डितम् ॥४२॥
अनिर्णेयवयस्कं च ज्वलन्तं ब्राह्मतेजसा ।
संविग्नपादविन्यासं स्खलद्वचनमञ्जुरम् ॥४३॥
दृष्टमात्रेण चोत्थाय संभ्रमाद्विनयान्वितः ।
आसने समुपावेश्य पाद्यार्घ्यैरुपचर्य च ॥४४॥
वीजयन्व्यजनेनापि खेदक्लिन्नं तपोधनम् ।
प्रोवाच त्यागराजस्तु स्वयं मधुरया गिरा ॥४५॥
मम संचितपुण्यानि फलदान्यद्य सर्वथा ।
यद्भवाञ्शंभुसंकाशः स्वयं मे गृहमागतः ।.४६॥
कम्पमानेन शिरसा संविग्नचरणेन च ।
कथं मे विषयं प्राप्तो दीर्घजीवी श्रमाकुलः ॥४७॥
निवेदितं भगवते गृह्णातु क्षीरमुत्तमम् ।
श्रमापनयनायाद्य भवान्भूसुरसत्तम ॥४८॥
श्रुत्वेदं वचनं प्रोक्तं प्रीत्या च विनयेन च ।
समागतो भूसुरस्तु गम्भीरमिदमब्रवीत् ॥४९॥
त्यागराज महाभाग श्रुत्वा ते शीलमुत्तमम् ।
कृच्छ्रादिदृक्षमाणस्ते गृहमद्यागतोऽस्म्यहम् ॥५०॥
प्रत्यक्षतश्च दृष्टोऽसि परा भक्ती रघूत्तमे ।
ब्राह्मणेषु च विश्वासो विनयः सौहृदं च ते ॥५१॥

पूर्वं तु भोजनादद्य विश्रामं नाभिरोचये ।
माध्याह्निकक्रियाहीनं भोजनं विषमेव हि ॥५२॥
अस्नातश्च कथं कुर्यां क्रिया माध्याह्निकीः पुनः ।
अत्रागच्छामि सुस्नातः कुरु पूजां यथातथम् ॥५३॥
इत्युदीर्य यदा कृच्छ्रादुदतिष्ठत्स्खलत्पदः ।
पपात सूत्रबद्धानि तालपत्राणि चाङ्कतः ॥५४॥
त्यागेशस्तानि संगृह्य संनतः प्रददौ करे ।
भूसुरस्तान्यनादाय तस्मिन्निक्षिप्य संययौ ॥५५॥
याचितोऽपि यदा शिष्यान्नानु नेतुं मनो दधे ।
प्रतस्थे त्यागराजोऽथ निरुद्धः सोऽपि तेन तु ॥५६॥
अचिरेणैव कालेन प्रार्थयन्पुनरागमम् ।
स्नानाय चोत्सुकं विप्रं विमना विससर्ज तम् ॥५७॥
पूजां च विधिवत्कृत्वा व्यग्रो ब्राह्मणदर्शने ।
अध्यतिष्ठद्बहिर्गेहं चिरं पश्यंश्चतुर्दिशः ॥५८॥
न ददर्श समायान्तं स्नातं ब्राह्मणमुत्तमम् ।
शिष्यान्संचोदयामास शीघ्रमानीयतामिति ॥५९॥
मार्गयन्तः सुदूरं ते कावेरीपुलिनेषु च ।
आलयेषु च तीरेषु निवृत्ता असमीक्ष्य वै ॥६०॥
शिष्यास्ते दीनमनसः श्रान्तास्तपनतापिताः ।
समागत्य गुरुं व्यग्रमूचुर्विप्रमनीक्षितम् ॥६१॥
शिष्याणां तु वचः श्रुत्वा दारुणं मरणोपमम् ।
त्यागेशः सहसोत्पत्य विचेतुं तं स्वयं ययौ ॥६२॥
शिष्याश्चान्वगमन्सर्वे श्रान्ताः श्रान्तेन चेतसा ।
मार्गयन्तश्च सर्वत्र ददृशुर्नैव भूसुरम् ॥६३
कूलेषु तं मृगयते नारिकेलवनेषु च ।
आलयं गच्छति पुनः सत्रेषु परिमार्गति ॥६४॥

परिपप्रच्छ दीनात्मा संगतानागतानपि ।
किं दृष्टो ब्राह्मणः कश्चिद्वृद्धो ज्वलनसंनिभः ॥६५॥
अनागतगतिस्तस्य विप्रस्य ज्यायसस्तदा ।
अपराह्नावधि श्रान्तो मार्गस्तं तत्र तत्र सः ॥६६॥
अन्विष्यन्नपि कृच्छ्रारस यदा नासादयत्पुनः ।
शोको भयं च सुमहद्विवेश श्रान्तचेतनम् ॥६७॥
कां वा गतिमनुप्राप्तः केन वा कुत्र वा पुनः ।
सुदुर्बलतनुर्वृद्धः प्रस्खलच्चरणः स्वयम् ॥६८॥
अहो महदिदं पापं प्राप्तं पापात्मना मया ।
दुर्लभो ब्राह्मणो गेहमागतो मे न रक्षितः ॥६९॥
संमार्गितं पुरं त्वेतत्सर्वं कृच्छ्रेण सादरम् ।
वर्षीयान्भूसुरस्त्वद्य कथं नासादितो मया ॥७०॥
ब्राह्मणः स तु तेजस्वी तपस्वी नियतात्मवान् ।
किमर्थमनृतं वक्ति पुनरागमनं तु मे ॥७१॥
न चैतदुचितं मन्तुं दुष्टचित्तैरपि स्वयम् ।
पापावहं भवेदद्य यद्धि विप्रवचोऽनृतम् ॥७२॥
प्रविष्टमात्रे कावेरीं स्नानाय गतकिल्बिषे ।
ग्राहेणैव समाकृष्टो जलमध्यं गतो भवेत् ॥७३॥
यादसा बलिनाऽऽकृष्टः कं कं वाऽस्मरदन्ततः ।
दुर्बलः श्लथसंधिश्च स्वादुकामस्तपोधनः ॥७४॥
इत्यादिभिर्दीनदीनैर्विलपन्वचनैरपि ।
साश्रुनेत्रो मृगयते विप्रं बन्धुमिव स्वकम् ॥७५॥
शिष्यैस्तु याचितो दीनैर्गुरुक्षेमैकनिश्चयैः ।
त्यागेशो विह्वलाङ्गश्च कृच्छ्राद्गृहमथाऽऽगमत् ॥७६॥
आहारे व्यवहारे च न रतिं प्राप्तवांस्तदा ।
निराहारोऽभवच्छोचन्पत्न्या चाप्यनुकूलया ॥७७॥

न गानेषु मतिं चक्रे न शिष्याणां तु पाठने ।
विलपन्नेव शुद्धात्मा सायंसंध्यामुपास्त सः ॥७८॥
यथावत्तारकं जप्त्वा पूजां कृत्वा यथाविधि ।
निराहारस्ततः शिश्ये पत्न्या सह यत्नतः ॥७९॥
शिष्याश्च परमक्रान्ता व्यवसायेन तस्य तु ।
उपवासरतास्तत्र शिश्यिरे दीनचेतसः ॥८०॥
गतायां तु त्रियामायां सुखसुप्ते सुहृद्गणे ।
भासिते जडवल्लोके नैशजन्तौ शमं गते ॥८१॥
विबुध्य त्यागराजस्तु संभ्रमेण तदाऽनघः ।
आजुहाव च तानुच्चैः शिष्यान्पत्नीं च सादरम् ॥८२॥
संभ्रमाच्च तदा सर्वे संययुस्तत्र विस्मिताः ।
तानुवाच ततस्तुष्टस्त्यागराज इदं वचः ॥८३॥
मध्यंदिने समायातः साक्षान्नारद एव हि ।
अनुग्रहकरोऽस्माकं कारुण्यात्स समागतः ॥८४॥
तालपत्राणि यत्पूर्वं प्रभ्रष्टान्यङ्कतः प्रभोः ।
स्वरार्णव इति ख्यातो ग्रन्थो देवैस्तु पूजितः ॥८५॥
दैवीं गानसमृद्धिं तु भूलोके कर्तुमिच्छता ।
नारदेन कृतं ह्येतद्ग्रन्थमर्पयितुं मयि ॥८६॥
स्वप्ने किल समागत्य नारदः प्राह मामिदम् ।
कारुण्यादेव रामस्य सर्वमेतदभून्मम ॥८७॥
इत्युक्तवन्तं त्यागेशं कौतुकात्संभ्रमेण च ।
समागत्य ददौ शिष्यस्तालपत्राणि सत्वरः ॥८८॥
त्यागेशस्तान्युपादाय कौतुकाद्विनयेन च ।
सूत्रबन्धं विमुच्याशु विस्मयेन ददर्श सः ॥८९॥
स्वरार्णवाभिधं ग्रन्थं पूतं दिव्यं निरीक्ष्य तु ।
तोषाम्बुधिनिमग्नोऽसौ तरितुं नैव शक्नुवन् ॥९०॥

दीपमुज्ज्वाल्य पूतात्मा नियतश्चापठत्सुधीः ।
गान्धर्वं गानशास्त्रं तद्विस्मयेन ननन्द च ॥९१॥
नवं च रागसंचारक्रमं गीतांश्च नूतनान् ।
रागांश्च विविधान्दृष्ट्वा निधिं प्राप्येव निर्धनः ॥९२॥
पुनः पुनः पठित्वैतद्धर्षेण महताऽऽवृतः ।
श्रीनारदेति गीतेन तुष्टाव मुनिपुंगवम् ॥९३॥
तच्छास्त्रसूक्ष्मं विज्ञाय कृतवान्विविधाः कृतीः ।
नूतनैरपि रागैश्च तालैश्च विविधैस्तथा ॥९४॥
श्रुत्वा तु नवगीतानि सर्वे ते विस्मिता जनाः ।
पुरान्तरात्समायातास्तथा देशान्तरादपि ॥९५॥
दिने च ववृधे संघः संगतानां सहस्रशः ।
श्रोतुं नवागतां दैवीं पूतां तां गानसंपदम् ॥९६॥
त्यागराजस्तु तान्भक्त्या प्रतिनन्द्य यथाऽर्हतः ।
गायति प्रणतो रामं यथा ते विवशीकृताः ॥९७॥

॥ इति श्रीमत्त्यागराजचरिते श्रीसुन्दरेशार्यविरचिते "नारदर्शनम्" नाम सप्तमः सर्गः ॥

---

## अथाष्टमः सर्गः ।

एकदा त्यागराजस्तु सायाह्ने तुष्टमानसः ।
शिष्यानध्यापयन्नास्ते बहिर्गेहे निजाः कृतीः ॥१॥
ततस्तु तुमुलः शब्दः कम्पयन्निव भूतलम् ।
संजज्ञे जनसंयोगोत्थो ह्यदूरादेव तस्य च ॥२॥
विस्मयेन ततः सर्वेऽपश्यंस्तां दिशमादरात् ।
ददृशुश्च समायान्तीं शिबिकां नेत्रहारिणीम् ॥३॥
हैमवन्तुसमाक्लृप्तरक्तकौशेयशोभिताम् ।
मुक्तामणिविचित्राढ्यां कलशैर्दान्तैश्च राजितैः ॥४॥

पराघ्यस्तरणोपेतां महार्हशिखरान्विताम् ।
दर्शयैर्महोपधानैश्च पञ्चभिः परिमण्डिताम् ॥५॥
वीरवादित्रसंघैश्च विविधैरनुनादिताम् ।
स्पृहणीयेन महता ध्वजेन समलंकृताम् ॥६॥
वीरघण्टामभिघ्नद्भिर्वीरवादान्भयंकरान् ।
कुर्वद्भिर्बहुभिर्व्याप्तां पुरोभागेषु चोद्धतैः ॥७॥
बालैर्वयःस्थैर्युवभिः संवृतां पुरवासिभिः ।
उच्चघोषैः सतालैश्च नवागमनकौतुकात् ॥८॥
विस्मयेन तदाऽपश्यत्त्यागेशः शिष्यसंवृतः ।
कोऽयं किमर्थमायाति वीथीं कस्माच्च कारणात् ॥९॥
अचिरेणैव तत्संघः शिबिकासहितो महान् ।
समीपमागत्य पुनस्त्यागेशस्य व्यतिष्ठत ॥१०॥
त्यागेशस्तां समुद्वीक्ष्य सुदीप्तां शिबिकां तदा ।
उत्फुल्लनयनद्वन्द्वः प्रैक्षिष्ट कुतुकेन च ॥११॥
स ददर्श समासीनं दर्श्यं च मनुजर्षभम् ।
गाम्भीर्येण च धैर्येण रूपेणापि समन्वितम् ॥१२॥
हैमतन्तुसमाक्लृप्तोष्णीषबन्धमनोहरम् ।
नवरत्नमहादीप्तकुण्डलाभ्यामलंकृतम् ॥१३॥
अन्तःस्थितं तमोराशिं प्रकटीकर्तुमुद्यतैः ।
दीर्घकृष्णभासमानं श्मश्रुजालैर्भयानकैः ॥१४॥
मुक्तावैदूर्यमालाभिर्वराभिः समलंकृतम् ।
अङ्गदान्यर्हकटकान्धारयन्तं महाद्युतिम् ॥१५॥
श्वेतरक्ते दधानं च वाससी हेमचित्रिते ।
उन्नतं भीमकायं च दुर्धर्षमितरैः पुनः ॥१६॥
संवर्धितेन वपुषा महार्हाभरणैश्च सः ।
ओद्धत्येन सदेताप्ति शिक्षुणां प्रभञ्जनात् ॥१७॥

त्यागेशे पश्यति तदा शिबिकाया महाद्युतिः ।
दत्तहस्तः शिष्यगणैः स्मयमानोऽप्यवातरत् ॥१८॥
त्यागेशः पुरतो गत्वा पार्श्वे तस्य वपुष्मतः ।
प्रतिनन्द्य यथान्यायमानिनाय च तं गृहम् ॥१९॥
आसने समुपावेश्य पूजयन्वचनैः शुभैः ।
परिपप्रच्छ धर्मात्मा सादरं सस्पृहं च तम् ॥२०॥
को वा नु भवता देशः समलंक्रियते विभो ।
के वा भवन्तमासाद्य तुष्यन्ति सहचारिणम् ॥२१॥
सुदूरागमने किं वा मन्यतेऽत्र प्रयोजनम् ।
किं वा मयाऽद्य कर्तव्यं भवतेऽद्य बहुश्रुत ॥२२॥
इत्युक्तस्त्यागराजेन विनयाद्बहुमानतः ।
समागतो बभाषेऽथ सगर्वं तमिदं वचः ॥२३॥
किं न श्रुतः केशवार्यः संगीताम्भोधिपारगः ।
बोब्बिलीनगरोद्भूतो धराया यस्तु भूषणम् ॥२४
पारं गताश्च संगीते पश्यन्तो यं ससंभ्रमाः ।
मूका भवन्ति मूढाश्च राजकीयसभासदः ॥२५॥
सर्वराजकुलैर्दत्तपारितोषिकसंचयान् ।
राज्ञां तु तोषणायैव बिभर्ति किल दुर्वहान् ॥२६॥
तमेव विद्धि सुभगं केशवं पुरतः स्थितम् ।
यत्किंचिज्ज्ञातवान्गीते त्वमित्यद्य श्रुतं मया ॥२७॥
बह्वीनां च कृतीनां त्वं कर्तेति श्रूयते पुनः ।
अनस्तमितचन्द्रे तु शोभन्ते तारकाः कथम् ॥२८॥
नवानि कृत्वा गीतानि शार्दूले मयि जीवति ।
कथं न लज्जसे मूढ त्वां जिगीषुरिहागतः ॥२९॥
दर्शयाद्यैव ते विद्यां दर्शयाम्यहमप्यमूम् ।
अभिभूतं प्रपश्येयं त्वामद्यैव क्षणादिह ॥३०॥

केशवे कथयत्येवं जहसुश्चानुगामिनः ।
करतालान्समाकुर्वन्स्मयमाना मदोद्धताः ॥३१॥
त्यागेशस्य तु ते शिष्या मन्वाना दैवतं गुरुम् ।
सगर्वमुक्तां तां वाचं न शेकुः सोढुमन्ततः ॥३२॥
पार्श्ववर्तितया चैव शीलज्ञानेन ते गुरोः ।
नियच्छन्तश्च तं कोपमपश्यन्क्रूरचक्षुषा ॥३३॥
त्यागराजस्तदा वाक्यं श्रुत्वा तत्केशवस्य च ।
प्रोवाच विनयाद्धीमानर्थयुक्तमिदं वचः ॥३४॥
सर्वे सृष्टा इमे लोका माधवेन चराचराः ।
कथं सर्वसमः कुर्यादेकमुत्कर्षभाजनम् ॥३५॥
सृष्टा भगवता शक्तिः प्राणिनां विविधा किल ।
काकः करोति यत्कर्म न तत्कर्तुमलं नरः ॥३६॥
पिपीलिकाया या शक्तिर्ज्ञाता केन नरेण वा ।
नावमान्यानि भूतानि तस्माज्ज्ञातवता पुनः ॥३७॥
एकमेव हि तद्ब्रह्म ततं नाना प्रदृश्यते ।
तरङ्गा इव पाथोधौ नाम्ना भेदं प्रपद्यते ॥३८॥
स्वर्णं कटकतां याति नूपुरत्वादिकं तथा ।
दारु सर्पगजत्वादि चैकमूलात्समानि हि ॥३९॥
तथैव मनुजाः कीटाः सर्वे ब्रह्ममयाः पुनः ।
तस्मात्तु नावमान्यानि भूतानि ज्ञानशालिना ॥४०॥
ज्ञातवन्तं न मन्येऽहमात्मानमितरात्प्रभो ।
सर्वे किल महात्मानः सर्वे भागवतोत्तमाः ॥४१॥
सर्वेषां तु परं कार्यं राघवस्य प्रपूजनम् ।
तदेव कर्तुं सततं यतेऽहं न तु साधितम् ॥४२॥
विभूष्य सुममालाभिर्यथा नन्दामि राघवम् ।
तथा कीर्तनमालाभिस्तुष्यामि बहुशो विभो ॥४३॥

अवमन्तुं परान्नैव करोमि भगवन्कृतीः ।
प्रकटीकरणार्थं वा स्वोत्कर्षस्य शुभानन ॥४४॥
राघवस्तु परं तुष्येदिति संचिन्तयन्नहम् ।
करोमि विविधं गीतं प्रार्थनावशगः स्वयम् ॥४५॥
किं वा मयाऽपराद्धं ते यद्मर्षवशो भवान् ।
अज्ञानाद्यदि वा क्लृप्तं मर्षयस्तव पण्डितः ॥४६॥
इत्युक्तस्त्यागराजेन केशवो भृशगर्वितः ।
हेलयेत्स्मयमानश्च बभाषे तमिदं वचः ॥४७॥
विज्ञाता भीरुता तेऽद्य यस्माद्वदसि चेदृशम् ।
शुश्रूषाऽस्ति त्वदीयानां गीतानां गीयतामिह ॥४८॥
मा भीतिस्तु त्वया कार्या यद्स्मत्संनिधाविति ।
क्षमेरंस्तव दोषांस्तु मम सर्वेऽनुगामिनः ॥४९॥
इत्युक्त्वा केशवः सर्वानुदैक्षत स हेलया ।
त्यागेशः स तु धर्मात्मा गातुमेव प्रचक्रमे ॥५०॥
सुश्रुतिं तम्बुरुं गृह्णन्ध्यायन्मनसि राघवम् ।
गायति स तदा कृत्वा गीतं विधुलकुन्निति ॥५१॥
त्यागेशे गायति स्वादु सुस्वरं भक्तिसंयुते ।
सर्वे नादे लीयमाना नाजानन्किंचिदप्यहो ॥५२॥
प्राप्य बोधं मुहूर्तेन केशवस्यानुगामिनः ।
विस्मयेन समाविष्टाः पश्यन्तोऽनिमिषा इव ॥५३॥
श्रुतवन्तो न ते गानमेतादृशमर्पणाः ।
श्रुतिबद्धं भावपूर्णं श्रोत्रमानसहारि तत् ॥५४॥
केशवस्तु समाकर्ण्य विस्मितश्च बभूव सः ।
कथमस्य तु गीतानि कर्षतीति मनांसि मे ॥५५॥
इत्थं स चिन्तयत्यस्मिन्केशवे भृशगर्विते ।
एन्तरो इति गीतं स सद्यः कृत्वा स्म गायति ॥५६॥

शृण्वतः केशवस्यापि तेषां चाप्यनुगामिनाम् ।
भयं विवेश हृदयं लज्जा च महती तदा ॥५७॥
तालभद्धानि साहित्यरत्नानि विविधान्यपि ।
भक्तिपूतानि तच्छ्रुत्वा केशवो मोहमावहत् ॥५८॥
संगीतस्य तु माधुर्यमियन्नैवानुभूतवान् ।
संगतो भारतं वर्षं श्रुत्वाऽपि निपुणैः कृतान् ॥५९॥
त्यागेशश्च तदाऽगायचिरादिव कृतिं तु ताम् ।
चरणैर्बहुभिः क्लृप्तां स्वरमालाविभूषिताम् ॥६०॥
गीते तस्मिन्समाप्ते तु केशवो भृशविस्मितः ।
आसनात्स्वयमुत्थाय वन्दितुं यतते स्म सः ॥६१॥
त्यागेशश्च समुत्थाय संभ्रमाद्विनयेन च ।
अनतं च तदा चक्रे मा मेति च वदन्वचः ॥६२॥
केशवश्च तदा तिष्ठन्विपीदन्पूर्वकर्मणा ।
प्रसादयंस्त्यागराजमिदमूचे स विह्वलः ॥६३॥
कृतं मया महत्पापं गर्वपर्वतवर्तिना ।
भवतश्चापि विद्याया अज्ञानाद्भक्तपुंगवः ॥६४॥
कुलीनः शिक्षितो वाऽपि श्रेयसा यदि योक्ष्यते ।
स हि मूढात्मतां याति मदमात्सर्यदूषितः ॥६५॥
वंशे महति संभूतः शिक्षितश्च महात्मभिः ।
अल्पविद्याक्षिगर्वेण भृशं हि कलुषीकृतः ॥६६
भवन्तं हि समासाद्य नारायणमिवापरम् ।
शान्तं क्रूरतरैर्वाक्यैर्लज्जेऽहमभिभूतवान् ॥६७॥
बहूक्तवन्तं दुष्टं मां न दुरुक्तं महात्मना ।
धारितं वाऽपि मनसि प्रियमुक्तं सुते यथा ॥६८॥
कः कुर्यात्कार्यमेतत्तु विना वा भवतः प्रभो ।
क्षमस्व करुणाम्भोधे दुरुक्तानि महामते ॥६९॥

इत्याभाष्य च दीनात्मा पश्चात्तापेन तापितः ।
अवमुच्य महार्हाणि वराण्याभरणानि च ॥७०॥
राजभिर्बहुभिर्दत्तान्दृश्यांस्तान्पारितोषिकान् ।
पादयोः प्रणतः प्रादात्स्वीकर्तुं याचते स्म सः ॥७१॥
त्यागराजस्तु धर्मात्मा कारुण्यादाकुलेन्द्रियः ।
सान्त्वयन्वचनं प्राह साश्रुनेत्रमवस्थितम् ॥७२॥
अस्थाने को न्वयं मोहः प्राप्तोऽद्य भवता विभो ।
पण्डितेन कृतां पूजां प्राप्तेन बहुराजभिः ॥७३॥
किमर्थमयमारम्भः क्रियतेऽद्य विपश्चिता ।
यदाभरणजालानि मह्यं दातुं समुद्यतः ॥७४॥
त्यज तं मोहमस्माशु सद्यो भूतमकारणम् ।
प्रतिष्ठितां भवानद्य प्राप्तया दृढया धिया ॥७५॥
नाहं तदाप्तये युक्तः शिष्याश्चेमे ममानुगाः ।
रक्षितुं नाप्यहं शक्तो न क्षमो धर्तुमप्युत ॥७६॥
प्रकाशतां भवानद्य धारयन्वपुषा स्वयम् ।
शिष्यान्मित्राणि बन्धूंश्च नन्दयस्त्वद्य भूषितः ॥७७॥
अहं हि नियमादर्शे तुष्यन्प्राप्तेन तु स्वयम् ।
एतद्भूषणमुख्यानि धारये वपुषा कथम् ॥७८॥
कमर्थं वा समुद्दिश्य मम दातव्यमित्यपि ।
मन्यते वा भवानद्य कृच्छ्रसंपादितानि च ॥७९॥
इत्युक्त्वा त्यागराजस्तु यदा नैक्षत भूषणम् ।
भृशसंविग्नहृदयः केशवः प्राह सादरम् ॥८०॥
नैतदाश्चर्यभूतं मे वक्ति यत्तु भवानिह ।
नियतेन्द्रियसंग्रामो राघवे विनिविष्टधीः ॥८१॥
युक्तः किं गर्दभो वोढुं जातीयाश्चीयमण्डनम् ।
कथं वा धारयाम्येतत्तिष्ठतीह भवत्यहम् ॥८२॥

गृध्रस्तूड्डयमानः खे सुदूरमपि दारुणम् ।
आराधनीयस्तु कथं दृश्यो वा गरुडो यथा ॥८३॥
संवृतेऽपि घनैः सूर्ये प्रकाशन्ते न तारकाः ।
शीलगुणमहाविद्ये स्थिते भवति के वयम् ॥८४॥
अल्पलाभेन विद्याया गमितोऽहमिमां दशाम् ।
मोहान्धकारमग्नं मां तारयत्वद्य किल्बिषात् ॥८५॥
शिष्यत्वेन गृहीत्वेममनुगृह्णीष्व सादरम् ।
अहं च मम शिष्याश्च दासाः स्मो भवतः प्रभो ॥८६॥
गीतानि भवतः श्रुत्वा न यास्याम्यथ पत्तनम् ।
विना वा भवता ब्रह्मंश्छात्रत्वं चाऽप्यनागतः ॥८७॥
गृह्णातु दक्षिणामेतां प्रियशिष्येण चोद्यताम् ।
मनसा परितुष्टेन चानुगृह्णातु मां भवान् ॥८८॥
इत्युक्त्वा चास्कृत्पादौ नमस्कृत्य कृताञ्जलिः ।
प्रार्थयामास नियतः स्वीकृत्य स्वस्य रक्षणम् ॥८९॥
त्यागराजस्य शिष्याश्च केशवस्यानुगामिनः ।
पश्यन्तोऽनिमिषास्तं तु विस्मितास्तेऽभवंस्तदा ॥९०॥
त्यागराजस्ततः प्राह साञ्जलिं पुरतः स्थितम् ।
भद्रमस्तु महाभाग कारुण्याद्राघवप्रभोः ॥९१॥
नाहं वृणे भूषणानि दत्तां यस्तानि वाञ्छति ।
यदीच्छा भवतः स्थातुं भवेयं नास्मि रोधकः ॥९२॥
विद्योत्कृष्टं तु मां मत्वा न स्थातव्यं महामते ।
संपूज्यो राघवोऽस्माभिः सहितैरिति वर्तताम् ॥९३॥
कृच्छ्रात्स यतमानोऽपि यदा नैच्छद्दृढव्रतः ।
भूषणानि ग्रहीतुं स कुटुम्बिभ्यः स चादित ॥९४॥
वियुक्तो गर्वभारेण नियतो नियतेन्द्रियः ।
केशवो न्यवसत्तत्र शिष्यत्वं प्राप्य शान्तधीः ॥९५॥

इतिश्रीत्यागराजचरिते सुन्दरेशार्यविरचिते
"केशवसमागमो" नाम अष्टमः सर्गः ॥

# अथ नवमः सर्गः ।

एकदा त्यागराजस्तु सायाह्ने संयतेन्द्रियः ।
कावेर्यां समुपास्ते स संध्यां स्नात्वा दृढव्रतः ॥१॥
समाप्याभिगते गेहं तिष्ठन्दूरे विनीतवत् ।
एको यवन्दे नियतो नूतनस्तु समागतः ॥२॥
तमाजुहाव पार्श्वे स त्यागराजो दयानिधिः ।
पप्रच्छ सादरं को नु किमर्थमिह चागतः ॥३॥
समीगतस्ततः प्राह प्राञ्जलिर्विनयान्वितः ।
अनन्तपुरसंस्थोऽस्मि यादवो रामपूजकः ॥४॥
गोविन्ददास इति मां वदन्ति पुरवासिनः ।
भगवान्करुणाम्भोधिः स्वप्ने मामिदमुक्तवान् ॥५॥
गच्छ पञ्चनदं क्षेत्रं दृष्ट्वा मद्भक्तपुंगवम् ।
त्यागराजं महाभागं कृतकृत्यो भविष्यसि ॥६॥
अनन्तस्य तदाज्ञां तु श्रुत्वा प्रीतिसमन्विताम् ।
द्रष्टुं भवन्तं त्वरितो महात्मानमिहागतः ॥७॥
दृष्टमात्रेण हृष्यामि भवन्तं राघवप्रियम् ।
अहो रामस्य करुणा स्वभक्तेषु विशेषतः ॥८॥
उपदेष्टुर्भवन्तं मे त्वविज्ञातं दुरासदम् ।
केन वा प्रतिकुर्वेऽहं राघवस्य दयानिधेः ॥९॥
स्पृहणीयो भवानद्य मानवैरखिलैरपि ।
यद्भवन्तं स्वयं रामो द्रष्टुं मां समचोदयत् ॥१०॥
राघवस्य मयान्लिग्घो दर्शनाद्भवतः प्रभोः ।
पावितोऽस्मि महाभाग कृतकृत्योऽस्मि सांप्रतम् ॥११॥
अभविष्यच्छुमानां तु दुर्लभां साधुसंगतिम् ।
गतेन किमन्यातं वा मया तु पुरुषर्षभ ॥१२॥

दृष्ट्वा भवन्तं तुष्यामि दृष्ट्वेव रघुपुंगवम् ।
दयार्द्रेण कटाक्षेण पालयैनं पदानतम् ॥१३॥
इत्युक्त्वा विनयात्पार्श्वे तिष्ठन्तं राघवप्रियम् ।
ननाम मनसा तं च राघवं शास्त्रनिश्चयात् ॥१४॥
ततः प्रोवाच धर्मात्मा प्रसाद्य विनयान्वितम् ।
आनन्दाश्रुपरिक्लिन्नवासाश्च स्मरणात्प्रभोः ॥१५॥
अहो रामस्य करुणा विपर्यीकृत्य मामपि ।
अचोदयद्भवन्तं च महाभागवतोत्तमम् ॥१६॥
यथा पितुर्वा मातुर्वा नालं पुत्रो यतोऽपि सन् ।
प्रतिकर्तुं यथा नाहं राघवस्य दयानिधेः ॥१७॥
इत्याभाष्य प्रियं तुष्टो नयंस्तं च गृहं ययौ ।
गृहद्वारे ददर्शाग्रे समवेतान्कुतूहलात् ॥१८॥
समागते त्यागराजे दर्शितश्छात्रसंचयैः ।
ववन्दे नियतस्त्वेकश्चरणौ संभ्रमेण च ॥१९॥
त्यागराजस्तु संवीक्ष्य नूतनं तं समागतम् ।
रुद्राक्षतुलसीकाष्ठमालाशोभितकंधरम् ॥२०॥
पप्रच्छ प्रीतिसंयुक्तः को वा कुत्र समागतः ।
करणीयं मया किं वा किमागमनकारणम् ॥२१॥
ततोऽब्रवीत्समायातो बहुमानात्कृताञ्जलिः ।
काशीवासिनमात्मानं रामदासाभिधं च सः ॥२२॥
अथोवाच भृशं तुष्टस्त्यागराजं दृढव्रतम् ।
आज्ञप्तो विश्वनाथेन स्वप्ने राघवबन्धुना ॥२३॥
गच्छ चोलांस्ततः पुण्यान्कावेरीतोयमण्डितान् ।
तत्र पञ्चनदं क्षेत्रं पञ्चपापापनोदकम् ॥२४॥
त्यागराजो वसत्यत्र महाभागवतोत्तमः ।
दैवीं गानसमृद्धिं च भुवि विस्तारयन्स्वयम् ॥२५॥

प्रत्यक्षेणापि संदृष्टौ राघवौ तौ महात्मना ।
दृष्ट्वा तं पावयात्मानं भक्तिं तनुमतीमिव ॥२६॥
आदिष्टः शंकरेणेत्थं भवन्तं द्रष्टुमुत्सुकः ।
त्वरयाऽत्रागतो विद्वन्पालयैनं महामते ॥२७॥
श्रुत्वा तद्वचनं श्लक्ष्णं श्रोत्रमानसयोः प्रियम् ।
त्यागेशो विस्मयाविष्टो रामप्रीतिमनुस्मरन् ॥२८॥
ततः प्राह मुदा युक्त आगतौ संगतानपि ।
मुञ्चन्नानन्दजं वारि पुलकाङ्कितविग्रहः ॥२९॥
अद्यैव दक्षिणादागाद्गोविन्दाख्यो महामतिः ।
संचोदितस्त्वनन्तेन प्रीत्या स्वप्ने यशस्विना ॥३०॥
सुदूरादौत्तरादद्य काश्या एकः समागतः ।
नियुक्तः प्रभुणा स्वप्ने जनमेनं निरीक्षितुम् ॥३१॥
कथं वा प्रतिकुर्वेऽहं रामस्य विदितात्मनः ।
महात्मनः प्रेषयति यो दीने मयि नित्यशः ॥३२॥
इत्युक्त्वा सह ताभ्यां स प्रविवेश गृहं मुदा ।
नत्वा च राघवं सर्वे पुरतः समुपाविशन् ॥३३॥
समागतौ तु तौ दृष्ट्वा तस्य पूजागृहं पुनः ।
राघवे परमां भक्तिं परां प्रीतिमुपागतौ ॥३४॥
परिवारेण रामोऽयं पूजितश्च विशेषतः ।
मनः प्रह्लादयन्भाति तेजसा द्योतयन्दिशः ॥३५॥
पूर्वजन्मसु वै तप्तमनेन बहुधा तपः ।
राघवं पूजयत्येवमियतीं भक्तिमाश्रितः ॥३६॥
ध्यायन्ताविति तौ हृष्टौ विनीतौ समयार्चताम् ।
त्यागराजं महाभागं गातुमेकां कृतिं तदा ॥३७॥
प्रागायत तदा कृत्वा रामकारुण्यविस्मितः ।
ऋणात्कथं तु भवतस्तरिष्यामीति कीर्तनम् ॥३८॥

द्रवचित्तेन तेनाशु कृत्वा गीतां कृतिं तु ताम् ।
श्रुत्वा ते विस्मितास्तत्र त्यागराजमपूजयन् ॥३९॥
समागतावुभौ तत्र गाननृत्यपरायणौ ।
संघगानं च कुर्वन्तौ चिरायास्तां सुतर्पितौ ॥४०॥
व्यत्यस्तो गुणकर्मभ्यां जप्येशः पूर्वजः स्वयम् ।
नानुमेने च मनसा भ्रातुरेताः कृतीः पुनः ॥४१॥
नियच्छन्नुत्थितं कोपं ग्रहोः कालादपि प्रभुः ।
नासोढ वर्धमानं तं संघं दूरादुपागतम् ॥४२॥
आप्रभातं कृतान्योपान्गृणद्धी रामनाम तत् ।
वादित्रसंघशब्दांश्च स व्यगर्हयदन्ततः ॥४३॥
परितुष्टोऽपि स भ्रातुः संगीतज्ञानकीर्तितः ।
विव्यथे ह्यातुरुद्वीक्ष्य नैरपेक्ष्यं धनार्जने ॥४४॥
असंपादनशीलोऽपि प्राप्तेनैवापि वर्तयन् ।
बिभर्ति दुर्भरानेतान्किमिति व्याकुलोऽभवत् ॥४५॥
गन्तुमन्तरनीशं मां कुर्वन्नेष महाजनः ।
कोलाहलसमायुक्तः सर्वदा किल तिष्ठति ॥४६॥
पिताऽपि मे भगवति भक्तिमेवाकरोत्तदा ।
किमेष संघः संप्राप्तो घोषो वाऽपि सुदारुणः ॥४७॥
यदि याचति दीनारं स्वं गीतं श्रोतुमागतान् ।
तद्धनं मेरुशिखरमनुकुर्वीत किं न हि ॥४८॥
संभूता तस्य सा कन्या सीता सीतासमा ननु ।
विवाहकरणे किं वा करिष्यति स मूढधीः ॥४९॥
यतमानोऽपि कृच्छ्रेण कृतवानपि दुष्कृतीः ।
न लभे स्वल्पकं धान्यं धनं वा प्रेयसीप्रियम् ॥५०॥
इत्यादिभिर्बहुविधैश्चिन्तयित्वा स मन्दधीः ।
एकान्तमानाय्य सदा त्यागेशं पुनरब्रवीत् ॥५१॥

जाने त्वां मद्गुणैः शीलैरतृप्तं दुःखितं भृशम् ।
तथाऽपि वच्मि सौहार्दाद्भ्रातृत्वमनुचिन्तयन् ॥५२॥
बुद्धिमांस्त्वं स्वभावेन वेदशास्त्राण्यधीतवान् ।
तथाऽपि बुद्धिमोहेन विपरीतेन वर्तसे ॥५३॥
अल्पज्ञानेन संयुक्ताः सामर्थ्यादुद्यमेन च ।
बहुद्रव्यमुपादाय सुखेन निवसन्ति ते ॥५४॥
अलंकृत्य सुतावम्र्यांस्तथा पत्नीगणानपि ।
भूषणैरतुलैर्द्रव्यैर्मोदन्ते देववद्भुवि ॥५५॥
धनमेव हि संग्राह्यं कृच्छ्रादपि विपश्चिता ।
इह वा प्रेत्य वा सर्वं वर्तते तु यदाश्रयः ॥५६॥
धनिनं बहु मन्यन्ते धनिनश्चेतरे तथा ।
विद्वांसः सर्वशास्त्राणां राजानश्च पदे स्थिताः ॥५७॥
न कुलं गणयन्त्येते न वैदुष्यं शुभात्मवताम् ।
दातृत्वं न च सौहार्दं महीयन्ते धनेन हि ॥५८॥
उत्सवेषु विवाहेषु संघेषु विविधेषु च ।
ज्वलन्ति किंनरीवच्च तेषां हि परमाः स्त्रियः ॥५९॥
धरन्त्यो बहुरूपाणि महार्हाण्यम्बराणि च ।
भूषा नूतनक्लृप्ताश्च प्रेक्ष्यन्ते सस्पृहं जनैः ॥६०॥
पुमांसोऽपि महान्तस्ते भूषिता वसनैः शुभैः ।
संवृताः सेवकैस्तीक्ष्णैश्चरन्ति किल राजवत् ॥६१॥
पण्डिता अपि दीनास्ते दारिद्र्येणाभिपीडिताः ।
अनुगच्छन्ति तं नित्यं स्तुवन्तश्च तमेव हि ॥६२॥
कथं दृष्ट्वाऽपि तानेतान्बहुविद्यः सुधीरपि ।
नेच्छस्यर्जितुमर्थं वै क्षणाल्लभ्यस्तु यस्तव ॥६३॥
कृच्छ्राच्च यतमानोऽपि नाहं प्राप्तुमलं धनम् ।
यतस्व संपादयितुं रोचते यदि मद्वचः ॥६४॥

भ्रात्रा ज्येष्ठेन कारुण्यादित्थमुक्तस्तदाऽनघः ।
पूजयन्मधुरैर्वाक्यैरित्युवाच महामतिः ॥६५॥
ज्येष्ठभ्राताऽसि संपूज्यः पितुस्तुल्यश्च मे भवान् ।
यदि वक्त्युचितं कर्तुं सर्वथा कृतमेव तत् ॥६६॥
अनर्थे त्वर्थभावोऽसौ प्राप्तो हि भवता विभो ।
संपादनीयं तु कथं धनं ज्ञातवता पुनः ।६७॥
सुखसाधनबुद्ध्यैव धनमिच्छन्ति मानवाः ।
अहिडिम्भं यथा बालो लौल्याद् बुद्धिविमोहतः ॥६८॥
वर्तते कुत्र वा सौख्यमायकालेऽथ रक्षणे ।
व्ययकालेऽथ वा सौख्यं नेक्षेऽहं विमृशन्नपि ।६९॥
जानामि दुःखगम्यं तद्दुःखस्यायतनं महत् ।
दुःखमुत्पादयत्येव दुःखे चैव समाप्यते ॥७०॥
सुखत्वं यदि वित्तस्य गुणो भवति नित्यशः ।
सुखिनः किमु वित्ताढ्याः सर्वे ते सर्वदा नराः ॥७१॥
तथैव धनहीनाश्च दुःखेनैवाभिपीडिताः ।
सुखलेशमनासाद्य वर्तन्ते किमु मानवाः ॥७२॥
अस्तु वा सुखदायित्वं वित्तस्य किमु वा फलम् ।
अपायसहितं चैव सर्वथाऽनित्यमेव च ।।७३॥
वित्तसंचयसंपन्ना दिवं गच्छन्ति तं विना ।
अथ वाऽत्रैव तिष्ठन्तं परित्यज्य स गच्छति ॥७४॥
इत्थं त्वनित्ये वित्ते तु को रमेताबुधोऽपि सन् ।
परिहारसमासाद्यचिन्तशान्तिफले नरः ॥७५॥
सार्धं सविनयं चैव साधुशीलेन सादरम् ।
इत्थमुक्तस्तदा ज्येष्ठः क्रोधाद्वचनमब्रवीत् ॥७६॥
किं मन्यसे त्वमात्मानं सर्वज्ञं वाऽपि पण्डितम् ।
पण्डितानितरांश्चैव मूढानपि विगर्हितान् ॥७७॥

यमुपास्से सोऽपि रामः प्रियभ्रात्रोदितं वचः ।
अनादृत्य गतोऽरण्यं कां कां नापाप चापदम् ॥७८॥
तथैव भविता नूनं तव चाद्यैव दुर्मग ।
प्रियेणोक्तं मया वाक्यं यतो नाद्रियसेऽधुना ।७९॥
धिक्त्वां सुगर्वितं क्लीबं मूढं पण्डितमानिनम् ।
इत्युक्त्वा क्रोधताम्राक्षः क्षणादन्तर्दधे तदा ॥८०॥
त्यागेशः स तु धर्मात्मा भ्रातृकोपेण विह्वलः ।
राघवं प्रार्थयामास भ्रातृसौशील्यसंपदे ॥८१॥

॥ इति श्रीत्यागराजचरित्रे सुन्दरेशार्यविरचिते 'जप्येशोपदेशो' नाम नवमः सर्गः ॥

---

## अथ दशमः सर्गः ।

भ्रात्रा यवीयसा प्रोक्तमर्थयुक्तं वचः शुभम् ।
श्रुत्वा शान्तिमनापन्नो जप्येशो विह्वलोऽभवत् ॥१॥
अशान्तमनसा चैव दुर्निवारार्थकामतः ।
असुखार्तो भृशं क्रुद्धो व्यषीददपि लज्जया ।२॥
कावेरीं प्रययौ तूर्णं पूर्णां परमवारिणा ।
सायाह्ने निर्वृतिं प्राप्य त्वधिगन्तुं च निश्चयम् ॥३॥
शिलातलमथासाद्य दिशं पश्यंश्च दक्षिणाम् ।
मनसा दूयमानेन मौनेनैवाभ्यवर्तत ॥४॥
चिरात्स चिन्तयामास कथं कृच्छ्रगतोऽस्म्यहम् ।
प्रेयस्या वा सुताया वा प्रतिवक्ष्यामि किं वचः ।५॥
सा तुदत्यर्थकामा मां महार्हवसनाय च ।
दृष्ट्वा सुतास्तु धनिनां भूषणेभ्यश्च बालिका ॥६॥
यत्तोऽपि बहुधा कृच्छ्राच्चिकीर्षुरपि दुष्क्रियाः ।
नावापमद्य दीनारं काचं वा काञ्चनं विना ॥७॥

भ्राता स्वयं त्यागराजः सर्वशास्त्रेषु पण्डितः ।
निःस्पृहो निरनुक्रोश उञ्छवृत्त्या तु जीवति ॥८॥
धनान्यपि तु दत्तानि कारुण्यात्पुरवासिभिः ।
सर्वाण्यतिथिसात्कृत्वा मोदते बालवच्छठः ॥९॥
यदहं वच्मि तत्कुर्याद्यवीयानिति निश्चयात् ।
इयन्तं कालमनयं स तिरस्कुरुते वचः ॥१०॥
उपकारेण हीनोऽपि संघं कृत्वा तुदत्ययम् ।
दुःश्रवैरुच्चघोषैश्च दिवारात्रमतन्द्रितः ॥११॥
यत्र कुत्रापि चागत्य चिरायाधिवसन्गृहम् ।
अट्टहासं वितन्वानः किमयं कुरुते जनः ॥१२॥
भक्षयन्निखिलं वस्तु वडवाग्निरिवाम्बुधिम् ।
किमर्थमत्र वसति रामनाम वदञ्जनः ॥१३॥
यदा विवासयाम्येनं दुर्धरं दुर्भगं जनम् ।
गृहादस्मात्तदा शान्तिर्मनसो मे भविष्यति ॥१४॥
संघेनानेन मे भ्राता चोत्पथं गमितो दृढम् ।
कुरुते निखिलं कर्म तेनैव किल चोदितः ॥१५॥
यदि संघेन मुक्तं तं भ्रातरं तु तनोम्यहम् ।
भूत्वा च मद्वशो नूनं स कुर्यान्मे चिकीर्षितम् ॥१६॥
कथं वा प्रेषितं संघं पश्यामि च चिरोषितम् ।
तदा संचिन्तयन्नित्थं नाध्यगच्छत्स निश्चयम् ॥१७॥
समालोच्य चिरं दीनः कुबुद्धिः कोपमास्थितः ।
संभ्रमेण तदोत्तस्थौ निश्चयं प्राप्य चात्मनि ॥१८॥
स एव मार्गस्तान्मूढानल्पान्द्रावयितुं पुनः ।
त्यागराजं वशीकर्तुमिति मन्दमुवाच सः ॥१९॥
अनेनैव हि संघोऽपि घोषमुत्पादयन्महान् ।
विवास्यते मयाऽद्यैव मत्वेत्थं स ननन्द च ॥२०॥

स गत्वा भवनं वेगात्संतुष्टहृदयस्तदा ।
पाकागारं प्रविश्याशु प्रेयसीं प्राह सस्मितः ।।२१॥
इयं सा ह्यन्तिमा रात्रिर्जनौघस्यात्र तिष्ठतः ।
प्रभाते खलु सुश्रोणि सर्वं विद्रावितं भवेत् ॥२२॥
मदधीनस्त्यागराजो भविष्यति सुलोचने ।
संपादितेन वित्तेन स्यावास्य सुखिनौ प्रिये ।।२३॥
इत्थमुक्त्वा स जप्येशो मन्दधीः पापनिश्चयः ।
सस्वजे प्रेयसीं हृष्टः कार्यपूर्तिविनिश्चयात् । २४॥
श्रुत्वैतद्वचनं भर्तुरपूर्वममृतोपमम् ।
प्रहर्षकौतुकाक्रान्ता जगादेदममर्षणा ॥२५॥
केनेदमद्य संपन्नं चिरात्समभिकाङ्क्षितम् ।
को वाऽस्य वक्ता कार्यस्य करणे बुद्धिसत्तमः ।।२६।
ततः प्राह स्म जप्येशः स्मयमानो मनस्विनीम् ।
वक्तव्योऽहं किमन्येन स्वबुद्ध्यैवं विनिश्चितम् ॥२७॥
वदन्नित्थं स मन्दात्मा कथयामास तद्रहः ।
करिष्यमाणं तत्कर्म श्रुत्वा सा विस्मिताऽभवत् ॥२८॥
चिरं विमृशतोः किं नौ पूर्वं चेतसि नास्फुरत् ।
कालं प्रतीक्षते सर्वमित्येतत्सत्यमेव हि ॥२९॥
प्रवृत्ते संघगाने त्वं गच्छ प्रीतिं विडम्बयन् ।
निवृत्ते निश्चिते न त्वां संदिहीरन्निमे जनाः ॥३०॥
इत्युक्त्वा सा तु भर्तारमसह्यशुभदर्शना ।
त्वरयामास गन्तुं तं पूजाकालकुतूहलात् ॥३१॥
गतस्तत्र ततो दृष्ट्वा धनिकान्पण्डितानपि ।
नानानगरवास्तव्यान्वणिजश्च स्वलंकृतान् ॥३२॥
अनुभोक्तुं गानरसं त्यागराजस्य संगतान् ।
अपाक्रमत किंचीरस भयेनापि च लज्जया ॥३३॥

आयान्तं भ्रातरं दृष्ट्वा समदृष्टिस्तदा सुधीः ।
संभ्रमेण समुत्थाय विनयेन प्रणम्य च ।३४॥
पार्श्वे तमुपवेश्यापि चोपविष्टस्तदाज्ञया ।
उवाचेदं वचो मन्दमानन्दाश्रुपरिप्लुतः ॥३५॥
भ्रातरद्य कृतार्थोऽस्मि यद्भवानत्र संगतः ।
चिराय प्रार्थितो विद्वन्नद्यैव करुणां व्यधाः ॥३६॥
पश्यत्वद्य रघूत्तंसं हृदयानन्दकारकम् ।
यथा मे प्राणभूतोऽयं भवतो भवतु प्रभो ॥३७॥
यथा नन्दामि तं दृष्ट्वा पूर्णचन्द्रमिव प्रजाः ।
तथा नन्दतु मे भ्रातः पूज्या च भवतः प्रिया ॥३८॥
यमेव पश्यञ्जीवामि भवेयं च विना मृतः ।
सेयं राघवमूर्तिस्तु प्रयच्छतु भवत्प्रियम् ॥३९॥
संसाराम्बुधिमग्नोऽपि यत्पदं पोतमावहन् ।
मोक्षपारं परं गच्छेदाराधयतु तं प्रभुम् ॥४०॥
अन्तर्बहिश्च यस्तिष्ठञ्जनांश्च हृदयस्थितान् ।
शिक्षारक्षणकारी तमाराधयतु राघवम् ॥४१॥
इत्युक्त्वा च पुनर्नत्वा पूजां कृत्वा यथाविधि ।
अगायदथ गीतानि भ्रात्रागमनकौतुकी ॥४२॥
बकुलैर्मल्लिकामिश्रैश्चम्पकैः केतकीदलैः ।
कुसुमैर्भूषितं रामं जप्येशस्तं ददर्श सः ॥४३॥
सर्वाभरणैश्चैव भूषितं नेत्रहारिभिः ।
तेजसा ज्वलितं दृष्ट्वा नितान्तं मुमुदे तदा ॥४४॥
पूजयामास च पिता तथा मम पितामहः ।
कथमेतत्तु सौन्दर्यं नूतनं प्रतिभाति मे ॥४५॥
अहो दुष्प्रसहं तेजो दिधक्षति च लोचनम् ।
तथाऽपि करुणाऽपाङ्गैर्वर्षतीवामृतं पुरः ॥४६॥

इत्येवं चिन्तयंस्तत्र विस्मयस्तिमितेक्षणः ।
पश्यन्राघवमूर्तिं च स्तब्ध एव व्यतिष्ठत ॥४७॥
समागतास्तथाऽगायन्द्वियामावधि सुस्वरम् ।
सर्वे संतुष्टमनसः सर्वे रामपरायणाः ॥४८॥
बोधितः शिष्यवर्गेण कालात्ययममन्दधीः ।
प्रास्वापयद्रघूत्तंसं क्षीरभक्ष्यं निवेद्य सः ॥४९॥
यथाऽऽगतं गताः सर्वे प्रहृष्टमनसस्तदा ।
जप्येशोऽपि कृतां पूजां प्राप्य भ्रात्रा यवीयसा ॥५०॥
स स्वमन्तर्गृहं गत्वा स्वास्तीर्णशयने स्थितः ।
चिन्तयामास कर्तव्यं विह्वलेनान्तरात्मना ॥५१॥
पण्डिता विश्ववन्तश्च सर्वे ते राजसंमताः ।
समायान्त्यादराद्द्रष्टुं राघवं मद्गृहोदितम् ॥५२॥
यदि ज्ञास्यन्ति ते सर्वे क्रियमाणां तु मत्कृतिम् ।
कथं मया विलज्जेन गन्तुं शक्यं बहिः पुनः ॥५३॥
अथ वा त्यागराजस्तु बहिःप्राणमिव स्थितम् ।
श्रुत्वा प्रनष्टं शुद्धात्मा कथं वा धारयेदसून् ॥५४॥
मन्त्रेणाराधितो रामो लक्ष्मणेनापि संवृतः ।
हरणायोद्यतं मां किं न दहेदसुरान्तकः ॥५५॥
अहो नु खलु मूढेनासमालोच्यैव केवलम् ।
महद्धि कर्तुमारब्धमात्मनाशकरं तु यत् ॥५६॥
मया करिष्यते कर्म नैव कृच्छ्रेण वर्तिना ।
अनिर्णयफलावाप्ति स्वसंदिग्धाशुभप्रदम् ॥५७॥
इत्यालोच्य चिरं सम्यग्गुणागुणविवेचनम् ।
सुष्वाप शयने स्वस्थः शान्तचित्तेन्द्रियस्तदा ॥५८॥
पूर्वं सुप्ता तु तत्पत्नी प्रबुद्धा प्रेक्ष्य नायकम् ।
प्रसुप्तं गाढनिद्रं तं हस्तेन समताडयत् ॥५९॥

स तु प्रबुद्धः कोपात्मा गर्हमाणः प्रियां तदा ।
शिश्ये पुनर्दृढं बद्ध्वा तूपधानद्वयं मुदा ॥६०॥
ततः सा क्रोधना चण्डी बलादुद्धृत्य तं स्वयम् ।
स्फुरितोष्ठाधरपुटा रोषाद्वचनमब्रवीत् ॥६१॥
किं शाऽद्य शेषे स्वस्थस्त्वं कार्यकालेऽभ्युपागते ।
स्वयमागत्य मामुक्त्वा करिष्ये कर्म तन्निशि ॥६२॥
अर्धरात्रिरियं भीमा शोभते मग्नतारका ।
आवृता चान्धकारेण महता घोरदर्शना ॥६३॥
संवृतं गगनं मेघैर्वर्षर्तुविभवोद्यतैः ।
हिमशीकरवद्वर्षद्वारिधारापरिप्लुतैः ॥६४॥
गम्भीरस्वनितेनापि तडिद्भिश्च पथि स्थितान् ।
तर्जयन्तीव जलदाः कुलटास्तस्करानपि ॥६५॥
पुत्री ते दुर्धराऽद्येति सहाय प्रहितोऽब्धिना ।
दूतवच्छ्वशुराधाशु पुरोवातः प्रसर्पति ॥६६॥
वातायनकपाटानि दृढं बद्ध्वा स्वपन्ति ते ।
रहः करणयोग्यानि दुष्कृतानि भवन्ति हि ॥६७॥
बहूदका च कावेरी बहुसंवर्तसंकुला ।
यत्नमानैस्तथाऽस्माभिः प्रक्षिप्तो नाभिगम्यते ॥६८॥
भुक्त्वा यथेष्टं विश्रान्ताः स्वपन्त्युदरिणः पुनः ।
संगतः शिष्यवर्गैश्च भ्रातुस्तेऽद्य शुभान्वित ॥६९॥
त्यागराजः प्रमत्तस्तु जाग्रद्रात्रिषु नित्यशः ।
प्रलपन्राम रामेति सर्वथा ननु तिष्ठति ॥७०॥
मद्भाग्यपरिणामेन सोऽपि सुप्तो दृढव्रतः ।
तत्पत्नी कमलाम्बाऽपि कमलिन्या समा निशि ॥७१॥
उत्तिष्ठ कुरु तत्कर्म पुरा यदभिनिश्चितम् ।
धीरोऽपि सर्वकार्येषु कथं भजसि दीनताम् ॥७२॥

व्यवस्यति न काले यः कदाचिदपि संगते ।
पश्चात्तापाभिभूतोऽपि प्राप्नुयात्किमसौ फलम् ॥७३॥
इत्युक्तः प्रियया धृष्टं वचनं मरणोपमम् ।
विषीदन्विह्वलः प्राह नैतद्युक्तमितीरयन् ॥७४॥
सुप्तं भुजंगं चरणैर्बोधयन्निव मूढधीः ।
अवोचं निश्चयं तन्वि यन्न सम्यग्विचिन्तितम् ॥७५
यदर्थमयमारम्भः क्रियते वरवर्णिनि ।
न तदाप्यं मया देवि विपरीतफलं नु तत् ॥७६॥
प्रनष्टे रामचन्द्रे तु प्राणभूते मनोहरे ।
त्यागेशः स तु धर्मात्मा वर्तयिष्यति वा कथम् ॥७७॥
मृते वा च मृतप्राये तस्मिन्भवति भामिनि ।
कथं धनार्जनं शक्यं तेन वा तस्य साम्प्रतः ॥७८॥
तस्मिन्हि पुरुषव्याघ्रे विद्यार्हगुणकर्मभिः ।
प्रीतिं परामुपगतो जनः पञ्चनदालयः ॥७९॥
यदि प्रकाशतां याति कुकर्मैतत्कृतं मया ।
अपवादोपसर्गौ च भवेतां मम निश्चितम् ॥८०॥
प्रनष्टे राघवे वाऽपि को वा निश्चितमन्ततः ।
विद्रावयति शुद्धात्मा जनसंघमितस्त्वित ॥८१॥
स चापि मम वश्यत्वं प्राप्नुयाद्वा कथं सुधीः ।
अथ वा स भवेत्खिन्नः शोकेन मयि दारुणः ॥८२॥
दुरुक्तोऽपि निरस्तोऽपि मया न प्रतिवक्ति च ।
कथं धर्मात्मने तस्मै द्रुह्येयमपि पातकी ॥८३॥
उद्योजितस्त्वयाऽद्यैव गतः पूजागृहं प्रिये ।
पश्यत्सु जनसंघेषु पूजां कीदृशमाचरत् ॥८४।
पूजिताश्च महीपालैः पण्डितास्तत्र विष्ठिताः ।
पार्श्वासने पुरस्तेषां न्यमन्त्रयदिमं यतः ॥८५॥

सर्वे मामेव पश्यन्ति बहुमानेन भामिनि ।
इत्थं प्रियस्य मे भ्रातुः कथं कुर्यां प्रियेऽप्रियम् ॥८६॥
इत्युक्ता साश्रुनेत्रेण प्रियेण सुहृदा तदा ।
जगाद वाक्यं वाक्यज्ञा मन्दं कर्णे स्वरान्विता ॥८७॥
बुद्धिमान्व्यवसायीति देशकालज्ञ इत्यपि ।
मन्वाना ह्यभवं नाथ दृष्टा तेऽद्यैव भीरुता ॥८८॥
त्वया ह्युक्तं पुरा नाथ भृशं संप्रार्थितोऽपि सः ।
नेच्छतीति त्वया प्रोक्तं कर्तुं वा श्रोतुमेव वा ॥८९॥
पितृतुल्यस्य ते वाचमकुर्वति सुदारुणे ।
कथं करिष्यसि दयां श्वपाके कुलजामिव ॥९०॥
त्वयैव पूर्वं रुदितं भ्राताऽयं न ममेति च ।
संप्रार्थितोऽपि दीनेन न करोति यदा वचः ॥९१॥
प्राणभूतास्तु ते भ्रातुर्विग्रहास्ते न संशयः ।
न म्रियेत प्रनष्टेषु पुनर्लाभविशङ्कया ॥९२॥
क्रन्देद् भृशं तथा मुह्येद्विह्वलः स ससंभ्रमम् ।
स्थिरो भवेच्च यद्यावां कथं वा न वशो भवेत् ॥९३॥
न घृणे चापि वश्यत्वं कृतस्य तु प्रतिक्रिया ।
कर्तव्या मानिना नाथ तस्मात्कुरु सुनिश्चितम् ॥९४॥
त्यजाकारणजातं च कारुण्यं ज्ञातिषु प्रभो ।
विद्रावितं च तत्संघं नूनं पश्यसि च क्षणात् ॥९५॥
भजन्ति सर्वे संतुष्टं तथा दुःस्थं त्यजन्ति च ।
कथमेनं नृशंसोऽयं क्रन्दन्तमनुयास्यति ॥९६॥
तस्मादनेन कार्येण गतसंघस्तु मानद ।
निरुपद्रवको नूनं भवता भवतु प्रभो ॥९७॥
कुरु कल्याणचित्तस्त्वं भ्रातुस्तव यवीयसः ।
अद्य विप्रियभूतं तु भविष्यच्छुभदापि तत् ॥९८॥

कथं तु दुर्भरं संघमुञ्छवृत्त्या तु वर्तयन् ।
भरिष्यति स शुद्धात्मा कृपां कुरु सुते यथा ॥९९॥
जानीयुर्वा कथं लोका मत्तैव कृतं त्विति ।
यत्र शिष्याश्च पत्नी च संगता बहवः परे ॥१००॥
स्वभावकुशला स्त्रीत्वात्तथा च नयपण्डिता ।
अकार्यं कार्यरूपेण कर्तुं तं सा न्ययोजयत् ॥१०१॥
श्रुत्वैव वचनं तस्या भ्रातृ रक्षणसंहितम् ।
मूढात्मा च तथेत्युक्त्वा कर्तुमेव प्रचक्रमे ॥१०२॥
उत्तरीयं दृढं बद्ध्वा कूर्चकेशांश्च सत्वरः ।
पूजागृहं ययौ मन्दं स्खलच्चरणयुग्मकः ॥१०३॥
मन्दं विन्यस्य चरणौ पश्यन्नपि चतुर्दिशः ।
गत्वा पदानि सप्ताष्ट व्यतिष्ठत भयाकुलः ॥१०४॥
ततः स चिन्तयामास दुष्कृतिं कर्तुमुद्यतम् ।
यदि पश्येयुरेते मां किं न कुर्युर्गतायुषः ॥१०५॥
इति संचिन्त्य मनसा भयेन विकलीकृतः ।
यत्र तिष्ठति पश्यन्ती भार्या तत्र समाययौ ॥१०६॥
प्रत्यागतं तु तं दृष्ट्वा ललना सा त्वमर्षणा ।
प्रणयादिव संक्रुद्धा प्रोवाच वचनं तदा ॥१०७॥
समालोच्यैव भीरुस्त्वं न करोषि वचस्तव ।
अन्यथा तु कथं शक्यमयमन्तुमिहाग्रजम् ॥१०८॥
व्याधिग्रस्तेन वा साध्यं प्रमत्तेनाकुलेन वा ।
अपादपाणिना कर्म न कथंचन भीरुणा ॥१०९॥
न पश्यामि तु तद्वैर्यं कथं पुरुषपुंगव ।
अबलासु च योषित्सु दृश्यते श्रूयतेऽपि च ॥११०॥
न हन्तुं भ्रातरं वच्मि नापि तच्छास्त्रसंचयान् ।
अल्पमेतत्कथं कर्तुं भीरुस्त्वं प्रतिपात्स्यसि ॥१११॥

तिष्ठात्र वसनं दीर्घं छादयन्मम पण्डित ।
द्रुतं गत्वा तु तत्कर्म क्षणान्निर्वर्तयाम्यहम् ॥११२॥
इत्युक्तवत्यां भार्यायां कोपशोकविमोहितः ।
ययौ तूर्णं तु तद्गेहं कार्यं कर्तुं समुद्यतः ॥११३॥
सुगन्धिकुसुमैश्चैव धूपैश्च घ्राणहारिभिः ।
वासितं प्रविवेशाशु गेहं तद्दीपशोभितम् ॥११४॥
प्रविष्टमात्रः सोऽपश्यद्भक्ष्याणि विविधानि तु ।
पश्यतस्तस्य सुस्राव जिह्वाया अम्बुबिन्दवः ॥११५॥
अनादृत्य तु तानार्तो भार्यावाक्यवशंवदः ।
तिरस्करणिकां गत्वा व्यतिष्ठत भयाकुलः ॥११६॥
कम्पमानकराग्रेण व्यपनेतुं तिरस्क्रियाम् ।
अक्षमो विक्लवश्चैव संविग्नचरणस्तदा ॥११७॥
अतिष्ठच्च चिरं तत्र भयमर्मोहपीडितः ।
स्वेदक्लिन्नशरीरश्च कथंचिदिव दुर्मनाः ॥११८॥
दार्ढ्यमापाद्य मनसः कृच्छ्राद्धैर्यमवाप्य च ।
तिरस्करणिकां सम्यङ्मीलिताक्षस्त्वपानयत् ॥११९॥
आहृत्य तां ततो भीरुः किंचित्पृष्ठेऽपसृत्य च ।
उन्मीलितुं तदा चक्षो न शशाक भयेन सः ॥१२०॥
उन्मील्य नेत्रे कृच्छ्रेण भयसंविग्नचेतनः ।
मन्दं मन्दं रामपार्श्वं स्विन्नगात्रोऽभ्युपाययौ ॥१२१॥
सोऽपश्यद्रामचन्द्रं च परिवारसमन्वितम् ।
सुगन्धचन्दनैरक्तं सुमनमालासुशोभितम् ॥१२२॥
चन्द्रकाङ्गदकेयूरवलयादिविभूषितम् ।
पीताम्बरेण कौशेयैः परिधानैश्च शोभितम् ॥१२३॥
श्वेतच्छत्रेण रम्येण चामररम्यव्यजनैः शुभैः ।
पार्श्वस्थैः शोभमानमयोध्यायां यथा पुरा ॥१२४॥

निरीक्षमाणो रामं च लक्ष्मणं जानकीमपि ।
मन्त्रैराराधितं तुष्टः प्रणनाम मुदाऽन्वितः ॥१२५॥
पश्यन्नपि चिरं राममतृप्यन्मुदितस्तदा ।
राम रामेति गायंश्च ननर्त भृशमोहितः ॥१२६॥
उपलभ्य क्षणात्संज्ञां पार्श्वे दृष्ट्वा ससंभ्रमः ।
सभयश्चिन्तयामास किमिदं मामुपस्थितम् ॥१२७॥
रामदर्शनमात्रेण कथमेनां दशां गतः ।
गायामि नृत्यामि पुनर्नमामि च सहस्रशः ॥१२८॥
क्षणादन्तर्दधे तोषो भार्याहेलनचिन्तनात् ।
शनैर्मालाश्च पुष्पाणि करेणाक्षिपदन्यतः ॥१२९॥
भूषणान्यवमुच्याशु वस्त्रे बद्ध्वा दृढं तदा ।
मन्त्रपूताग्राघवादिविग्रहांश्च जहार सः ॥१३०॥
मुखवातेन निर्वाप्य दीपान्स च विमूढधीः ।
प्रययौ गृहपृष्ठेन पत्न्या किंचिदनुद्रुतः ॥१३१॥
वस्त्रेणाच्छाद्य गच्छन्तं दृष्ट्वा प्रीता पतिं तदा ।
अनुवव्राज सीमान्तं प्रार्थिता प्रत्युपागता ॥१३२॥
अमार्गेणैव गच्छन्स गृहपृष्ठेषु दुष्टधीः ।
गाढान्धकारे मार्गे च निपपात पुनः पुनः ॥१३३॥
पतन्भूमिषु गर्तेषु स्खलंश्चोन्नतभूमिषु ।
कण्टकाविद्धसर्वाङ्गः पङ्कदूषितलोचनः ॥१३४॥
तिर्यग्गतं च मार्जारं भुजंगं च भयावहम् ।
दृष्ट्वा संविग्नहृदयः प्रस्खलच्चरणश्च सः ॥१३५॥
रात्रौ यामावशिष्टायां गगने गततारके ।
वर्षत्यम्बुधरे मन्दं पुरोवाते भयावहे ॥१३६॥
उलूकगणशब्देन शिवानां निनदेन च ।
घोरायामेव रात्रौ स पिशाच इव गच्छति ॥१३७॥

अदूरादेव कावेरीं तोयपूर्णां ददर्श सः ।
आवर्तैर्बहुभिर्गर्तैर्गंभीरां जाह्नवीमिव ॥१३८॥
प्राप्य तीरं तु कावेर्याः पश्यन्नाशां च दक्षिणाम् ।
अपातयन्महागर्ते विग्रहांश्च स मन्दधीः ॥१३९॥
तस्य पातयतो देहः प्राकम्पत भृशं तदा ।
नेत्रे चावर्षतामश्रु हृदयं भयमाविशत् ॥१४०॥
आगतेनैव मार्गेण त्वरमाणो गृहं ययौ ।
पश्यन्नेव चतुर्दिक्षु मूषकेभ्योऽपि शङ्कितः ॥१४१॥
प्रतीक्षमाणा भार्याऽथ प्रत्यागमनमञ्जसा ।
कार्यकारिणमायान्तं भर्तारं प्रेक्ष्य हर्षिता ॥१४२॥
उवाच च वचो मन्दं परितुष्टाऽस्मि सांप्रतम् ।
यद्भवान्व्यवसायेन निश्चितं तन्नधात्सुधीः ॥१४३॥
क्व वाऽऽभरणजालानि महार्हाणि महान्ति च ।
पितुर्गृहमुपादाय करिष्ये नूतनं मम ॥१४४॥
इत्युक्तस्तु तदा पत्न्या रक्तया नूत्नभूषणे ।
संभ्रमेण तदाऽपश्यत्तद्बद्धं स्वोत्तरीयकम् ॥१४५॥
विषादेन ततः प्राह प्रेयसीं भूरितोषिताम् ।
अहो मूढेन तद्वस्तु पातितं हि सरिज्जले ॥१४६॥
इदं बद्धानि वस्त्रे मे भूषणान्यखिलान्यपि ।
संभ्रमेण निशुचेन पातितानि च तान्यहो ॥१४७॥
मा रोषं भज कार्येऽस्मिञ्शोकं वा मोहमेव वा ।
शय्यां भज विशालाक्षि स्वप्स्यामि च यथापुरम् ॥१४८॥
इत्युक्त्वा शयनं प्राप्य कृतकृत्यममन्यत ।
भूपानाशाकुला साऽपि कृतकृत्येत्यमन्यत ॥१४९॥

॥ इति श्रीमत्यागराजचरिते श्रीसुन्दरदेशार्यविरचिते 'रामविग्रहक्षेपो' नाम दशमः सर्गः ॥

---

## अथैकादशः सर्गः ।

प्रत्यूषे तु ततः प्राप्ते प्राच्यां जातेऽरुणोदये ।
विबुद्धस्त्यागराजस्तु संभ्रमेणाह्वयत्स्थितान् ॥१॥
नृसिंहरामगोपालाः क्षणादिह विबोधत ।
स्वप्नो मयाऽद्य संदृष्टो दारुणश्च भयावहः ॥२॥
आहूतास्ते तु गुरुणा विबुद्धाः संभ्रमान्विताः ।
आययुर्गुरुमासीनं पत्नी च कमलाम्बिका ॥३॥
तानुवाच स धर्मात्मा विह्वलान्पुरतः स्थितान् ।
दृष्टः स्वप्नो मया ह्यद्य येनाहं कलुषीकृतः ॥४॥
वेपते च शरीरं मे चेतो मुह्यति चासकृत् ।
अश्रूणि वर्षतो नेत्रे किं वक्ष्ये कृपणस्त्वहम् ॥५॥
अत्र चैकः समागत्य सर्वानस्मान्ददर्श ह ।
सुप्तान्संवीक्ष्य संतुष्टो ययौ रामनिकेतनम् ॥६॥
इति ब्रुवन्नेव तदा मोहेन निपपात सः ।
आश्वासितश्छात्रसंघैर्दीनः प्रोवाच सत्वरः ॥७॥
स गत्वा रामनिलयं व्यपनीय तिरस्क्रियाम् ।
इत्थमुक्त्वा त्यागराजः पुनर्मोहमुपाययौ ॥८॥
व्यषीदच्छिष्यवर्गश्च पत्नी च कमलाम्बिका ।
व्यजनैर्वीजयामासुर्बुद्धिमोहस्य शान्तये ॥९॥
लब्धसंज्ञस्ततः प्राह रुदन्नेव महायशाः ।
राघवं लक्ष्मणं सीतां गतस्त्वाहृत्य दक्षिणाम् ॥१०॥
इत्युक्त्वा त्यागराजस्तु स्विन्नगात्रो रुदंस्तदा ।
स्वेदक्लिन्नशरीरश्च मोहेन निपपात सः ॥११॥
संभ्रान्ताश्च ततः सर्वे परितः समवस्थिताः ।
वीजयन्तश्च ते केचिन्नेत्रे प्रममृजुः करैः ॥१२॥

एवं गुरौ शयाने तु विसंज्ञे प्राप्तसाध्वसे ।
एकोऽद्रवत्तदा तूर्णं द्रष्टुं तद्राममन्दिरम् ॥१३॥
स गत्वा भवनं तत्र ददर्श भुवि पातिताः ।
सुममालाश्च रम्यास्ता दीपान्नियमितानपि ॥१४॥
तिरस्क्रियां व्यपेतां च परिवारेण संयुतम् ।
हृतं तं राघवं चैव सर्वाभरणभूषितम् ॥१५॥
दृष्टमात्रेण चुक्रोश भयसंविग्नमानसः ।
सर्वे समागतास्तत्र संभ्रान्ताश्चाकुलेन्द्रियाः ॥१६॥
तद्दृष्ट्वा सुमहत्कर्म कृतं घोरतमं पुनः ।
सर्वे मूढधियश्चासंस्त्यागेशप्राणरक्षणे ॥१७॥
स्वप्नदर्शनमात्रेण रामप्राणो गुरुः पुनः ।
इमामवस्थां गमितो विसंज्ञश्च भुवं गतः ॥१८॥
कथमेनं पुनर्दृष्ट्वा प्रत्यक्षेण महायशाः ।
असह्यमस्माकमपि स प्राणान्न्वर्तयिष्यति ॥१९॥
नूनं किल महात्मा स परित्यक्ष्यति जीवितम् ।
सहिष्यते कथं घोरं कार्यमेतदचिन्तितम् ॥२०॥
कमलाम्बा महाभागा वर्तयिष्यति वा कथम् ।
विहाय राघवं चैव पतिं प्राणसमं तथा ॥२१॥
अस्माभिर्वा कथं त्वत्र वर्तितव्यं शुभात्मभिः ।
गुरौ गते सपत्नीके महत्कष्टमुपागमत् ॥२२॥
इत्येवं चिन्तयन्तस्ते विह्वलेनान्तरात्मना ।
न शेकुस्तं तु गुरवे विज्ञापयितुमन्ततः ॥२३॥
चिरेण संज्ञां संप्राप्य पत्नीमेकां निरीक्ष्य च ।
विह्वलस्त्यागराजस्तु प्राह दीनामवस्थिताम् ॥२४॥
वर्तसे कथमेका त्वं क च्छात्रास्त्वद्य ते गताः ।
मनो मुह्यति मे कान्ते स्वप्नसंदर्शनादिह ॥२५॥

शक्यते न मयोत्थातुं गन्तुं वा वरवर्णिनि ।
नय मां रामगेहं तद्यत्र निर्वृतिमाप्नुयाम् ॥२६॥
तमेव दृष्ट्वा दीर्घाक्षं चक्षुर्मानसहारिणम् ।
मोहं च विसृजान्येनं प्राप्नवानि बलं पुनः ॥२७॥
इत्युक्तवन्तं भर्तारमामृशन्ती करेण सा ।
मन्दमुत्थापयामास विह्वला विह्वलं स्वयम् ॥२८॥
दत्तहस्तस्तया देव्या मन्दं रामगृहं ययौ ।
अदूरादेव सोऽपश्यच्छिष्यान्बाष्पसमाकुलान् ॥२९॥
तान्दृष्ट्वा दीनवदनान्साश्रुनेत्रान्भृशार्दितान् ।
पप्रच्छ त्यागराजस्तु कारणं शोकमोहयोः ॥३०॥
अहं मक्षतिमापन्नस्त्यक्त्वा मोहं शुभान्विताः ।
किमर्थं भवतामद्य भयमेतदुपागतम् ॥३१॥
अयथापूर्वमास्तेऽद्य किमिदानीं मुखं तु वः ।
पृच्छन्तं नाभिभाषध्वे भयशोकाकुलाः किमु ॥३२॥
इति प्रोक्तास्तु ते शिष्या गुरुदेवा जितेन्द्रियाः ।
गुरुणा परमार्तेन न शेकुस्तं समीक्षितुम् ॥३३॥
अन्योन्यमेव पश्यन्तो मुखानि कलुषेन्द्रियाः ।
संस्तम्भकण्ठा भीताश्च वर्षन्तोऽश्रूणि विह्वलाः ॥३४॥
तान्दृष्ट्वा दीनवदनान्प्रत्युत्तरपराङ्मुखान् ।
त्यागराजस्तु शुद्धात्मा विषसाद भयान्वितः ॥३५॥
ततः पप्रच्छ कोपेन शोकेन कलुषीकृतः ।
कथं मां बहु पृच्छन्तं नेच्छथ प्रतिभाषितुम् ॥३६॥
शिष्याणां यतरेषां वा कृत्वा मानसविप्रियम् ।
व्यलीकेन समाक्रान्तो नाहं जीवितुमुत्सहे ॥३७॥
यदि श्रुतं भवद्भिस्तु गुरुधर्मरतैः पुनः ।
अपवादोऽपि वक्तव्यस्तस्येन परिपृच्छतः ॥३८॥

दुःस्वप्नकातर इति न विशङ्का शुभात्मभिः ।
कर्तव्या भक्तिभारेण ब्रूत यन्मनसि स्थितम् ॥३९॥
इत्यादरेण संपृष्टा धर्तुं शोकमनीश्वराः ।
शशंसुस्ते रुदन्तस्तद् गुरवे भृशमप्रियम् ॥४०॥
कथं हन्तापवादस्तु शुद्धात्मानं समीहते ।
धर्मज्ञं सत्यसंधं च भूतानामपि वत्सलम् ॥४१॥
अहो नु खलु दैवेन वञ्चिताः प्रभविष्णुना ।
राघवः परिवारेण येन केनाप्यपाहृतः ॥४२॥
श्रुत्वेदं वचनं तीक्ष्णं वज्रपातस्वनोपमम् ।
विसंज्ञो विह्वलाङ्गश्च पपात धरणीतले ॥४३॥
कमला कमलाकान्तहरणेनाकुला भृशम् ।
रुरोद करुणं दीना कुररीवोत्पथं गता ।४४॥
पतिं समीक्ष्य पतितं विसंज्ञं च पतिव्रता ।
पवमानसमाधूता कदलीवाकुलाऽभवत् ॥४५॥
यमेव पश्यन्धर्मात्मा बहिःप्राणमिवात्मनः ।
तुष्टो विना तु तं देवं धारयेज्जीवितं कथम् ॥४६॥
भ्रात्रा निरस्तः क्रुद्धेन दुरुक्तोऽप्यपमानितः ।
रामं स्निग्धमिव प्राप्य निवेदयति सादरम् ॥४७॥
आधिं व्याधिं तु संप्राप्तः संक्लिष्टहृदयोऽपि सः ।
दृष्ट्वा स्वलंकृतं रामं सुखेव भवति प्रभुः ॥४८॥
यत्र कुत्रापि गच्छन्स दृष्ट्वा पुष्पं फलानि च ।
॰सुगन्धमधुरं रम्यं रामायाहृत्य मोदते ॥४९॥
सुप्तोऽप्युत्थाय रामं तं दृष्ट्वा संप्रीतमानसः ।
लावण्यमोहितश्चैव पुनः स्वपिति शान्तधीः ॥५०॥
अलंकृत्य सदा रामं दृष्ट्वा तं परमोत्सुकः ।
उन्मत्तवत्प्रलपति नृत्यत्यानन्दसंकुलः ॥५१॥

यदि लब्धानि पुष्पाणि महान्ति मृदुलानि च ।
राघवं समलंकृत्य कां तुष्टिं प्राप्तवानयम् ॥५२॥
करणीयानि मनसि बहून्यासन्मनस्विनः ।
परिवारसमेतस्य राघवस्य विशेषतः ।५३॥
कथं शक्ष्यति धर्मात्मा शोकमेनमुपागतम् ।
न विमोचयितुं प्राणान्किं पापः सुमहानयम् ।५४॥
इत्यादिभिर्बहुविधैर्विलप्य करुणं बहु ।
पतिं ममार्ज हस्तेन वर्षन्ती चाश्रुसंचयम् ॥५५॥
शिष्यास्ते विह्वलाङ्गाश्च गुरुं दृष्ट्वा तपस्विनम् ।
भवितव्यं किमद्येति बभूवुश्चिन्तयाऽऽकुलाः ॥५६॥
संज्ञां प्राप्य तदाऽपश्यत्संविग्नान्परितः स्थितान् ।
त्यागराजश्च दीनात्मा पुनर्मोहमुपागमत् ॥५७॥
कृच्छ्राल्लब्ध्वा पुनः संज्ञां मन्दमुत्थाय चास्थितः ।
सर्वानुद्वीक्ष्य निर्विण्णान्पप्रच्छ भृशविस्मितः ॥५८॥
दिवा वा रजनी किं वा किं गीतं सुष्ठु चिन्तितम् ।
विप्रुथाऽत्र किमर्थं वा विना पाठसुचिन्तनम् ॥५९॥
रचिताः सुष्ठु किं माला निर्मितं चन्दनं किमु ।
आनीयतां च कलशो ह्यभिषेक्ष्यामि राघवम् ॥६०॥
इति तं प्रलपन्तं तु दृष्ट्वा सर्वे भयान्विताः ।
कर्तव्यमूढमनसः संविग्नाश्चाभवंस्तदा ॥६१॥
तदा तु कमला शोकं निगूह्यात्मनि संस्थितम् ।
व्यपोहयन्ती तद्दुःखं जगादेदं वचः शुभम् ॥६२॥
रजनीयं प्रभाताऽद्य स्नानकालोऽयमागतः ।
उत्तिष्ठ कुरु कर्माणि यावद्भाति रविः पुरः ॥६३॥
ततः प्रोवाच शुद्धात्मा परितः समवस्थितान् ।
किमर्थमत्र तिष्ठन्तो लम्बास्या दीनचेतनाः ॥६४॥

भर्तारं मोहितं दृष्ट्वा कमला प्रियभर्तृका ।
अविज्ञातगतिः प्राह वेदयन्ती तदप्रियम् ॥६५॥
अहो नु खलु शुद्धात्मन्न जानीषे महद्भयम् ।
राघवः परिवारेण केनापि हि समाहृतः ॥६६॥
श्रुत्वैतत्तु तदा व्यग्रः समुत्थाय च संभ्रमात् ।
दुद्राव रामनिलयं भयशोकविमोहितः ॥६७॥
अपश्यच्च तदा दीनः प्रकीर्णाः सुमनमालिकाः ।
राघवं च हृतं तत्र परिवारसमावृतम् ।६८॥
अचिन्तितमिदं दृष्ट्वा दुष्कृतं च भयानकम् ।
स विव्यथे त्यागराजो भृशमार्तो रुरोद च ॥६९॥
केनेदं तु कृतं कर्म मरणाय ममेप्सितम् ।
कस्यापराद्धं तु मया दीनेनाल्पेन भीरुणा ॥७०॥
बन्धुभिस्तु निरस्तोऽपि तथा पौरैरमर्षिभिः ।
यमेव पश्यंस्तुष्टात्मा कथं सोऽद्य विवासितः ॥७१॥
पितरं मातरं बन्धुं सोदरं स्निग्धमेव च ।
व्यपोह्य रामं वृत्तेन किं वा मम न चाहृतम् ॥७२॥
कृच्छ्रादाराधितो रामः क्षणमागत्य मत्पुरः ।
विमोहेन परिवृनं विहायान्तर्दधे पुरा ॥७३॥
तमेव पश्यन्प्रत्यक्षमर्च्यरूपेण सुस्थितम् ।
नन्दामि विस्मरन्दुःखं सहते नापि तद्विधिः ॥७४॥
अहो राम महाबाहो गजवाजिसमन्वितम् ।
वित्तवन्तं पालयेस्त्वं निर्धनं किमु मत्समम् ॥७५॥
कथं वा शबरीं दीनां जटायुमपि गृध्रकम् ।
सुग्रीवं राज्यहीनं चारक्षस्त्वं नियतो भवान् ॥७६॥
नार्च्यते किं मया रामो शबरीमोक्षदायकः ।
जातो दशरथाच्चैव किमन्यः पुनरर्च्यते ।७७॥

नाहं तदनुशोचामि यद्रामोऽद्य विवासितः ।
कस्तस्मै मातराशाय क्षीरमाहारयिष्यति ॥७८॥
स हि सर्वोन्नितो रामो राजतेऽतीव यत्र सः ।
संपूज्यते महार्हैश्च वञ्चितोऽस्म्यहमेव तु ॥७९॥
धन्यास्ते तु महात्मानः पूजयन्ति च तं प्रभुम् ।
अनुभूय परानन्दं शोच्योऽहं तद्विनाकृतः ॥८०॥
नित्योत्सवं वृणे नैव वार्षिकं मासिकं तथा ।
अक्षतैस्तुलसीभिश्च नार्चितुं संनिधास्यति ॥८१॥
गृहमद्य तु मे शून्यं दिशः सर्वास्तथा भुवः ।
महान्धकारमग्नोऽस्मि महाप्रलयवत्स्वयम् ॥८२॥
वज्रेणेति कृतं मन्ये हृदयं मम दुर्भगम् ।
यन्नाभिद्यत दृष्ट्वाऽपि राघवं तमपाकृतम् ॥८३॥
त्यक्त्वा कुकर्म सत्कर्तुं न यतन्ते जनाः पुनः ।
यतेत यदि कश्चित्तमधरीकुरुते कलिः ॥८४॥
राघवस्य तु पश्येयं सुप्रसन्नं मुखं कदा ।
तरङ्गितकृपासारैः कटाक्षैः पाति यत्सदा ॥८५॥
अहो नु खलु दीनेन प्राप्ता शोकपरंपरा ।
दुष्कृतैर्दूयमानस्य सोदरस्येयमागता ॥८६॥
उञ्छवृत्तिमुपादाय कस्य वा पुरतस्त्वहम् ।
निक्षिप्य मङ्गलैर्गीतैरुपस्थास्ये रघूद्वहम् ॥८७॥
अथ वा किमु मद्गेहे वस्तुं नाभिरुचिः पुनः ।
असम्यक्पूजकस्यास्य भक्तिहीनस्य सांप्रतम् ॥८८॥
सुग्रीवदण्डभीतांस्तान्वानरान्यो ह्यपालयत् ।
अनन्यगतिकं प्राप्तं कथं त्यजति मां प्रभुः ॥८९॥
संरक्ष्य वानरान्गृध्रं मल्लुकानपि राघवः ।
कथं मनुष्यं त्यजति बुद्ध्या पादमुपागतम् ॥९०॥

नाहं रिपोः सोदरस्तु न पत्नीमानघातकः ।
गुहायां भ्रातरं बद्ध्वा तत्पत्नी नाहृता मया ॥९२॥
न वासवे प्रियं प्राप्ता धर्मपत्नी महामुनेः ।
नाहं किराती स्त्रोच्छिष्टफलमूलप्रदायिनी ॥९३॥
इत्यादिभिर्बहुविधैर्विलप्य करुणं बहु ।
निश्वासाश्रयशेन गजराज इवावृतः ॥९४॥
स विव्यथे भृशं स्वार्तः सिंहशद्बाणघातितः ।
शार्दूलो वागुराबद्ध इव खिन्नो बभूव सः ॥९५॥
भुजंगेनेव संदष्टदेहः स भयमोहितः ।
वातसंध्वस्तकदलीकाण्डवच्छोभते न सः ॥९६॥
अविज्ञाय पुनः किंचित्तत्र तत्र स मार्गति ।
अन्तर्गृहेषु सर्वेषु पुनः पूजागृहेषु च ॥९७॥
प्रलपन्नपि दीनात्मा यत्किंचिदपि वाग्वशात् ।
प्रमत्त इव भूतेनाविष्टवच्च चरत्यहो ॥९८॥
विमानं रामहीनं तत्पश्यन्नश्रूणि मुञ्चति ।
प्रियेत्युक्त्वा तु वचनं न किंचिदपि भाषते ॥९९॥
तिष्ठत्युपविशत्यार्तः पुनश्च परिसर्पति ।
विह्वलश्चरति व्यग्रो मार्गितांश्च विमार्गयन् ॥१००॥
जीवामि वा कथं रामं विहाय जनकात्मजाम् ।
अहो लक्ष्मण यातोऽसीत्यार्तश्च प्ररुरोद सः ॥१०१॥
शान्तधीः स तु धर्मात्मा राघवः सर्वबान्धवः ।
कथं लक्ष्मण तद्धस्तो न दग्धो येन हारितः ॥१०२॥
यथा रामस्य मे पूजा बभूव न मनोहरा ।
तथा न रुचिता किं नु तवापि भृशवत्सल ॥१०३॥
अन्यथा तत्कथं साध्यं हर्तुं त्वयि च पश्यति ।
त्वामप्यापापहर्तुं वा किं करोम्यद्य दीनधीः ॥१०४॥

भक्तानां रक्षणे पूर्वमुद्योजयसि राघवम् ।
मां वा न मन्यसे भक्तं त्यक्त्वा किं वाऽपि तत्कृतिः ॥१०५॥
अहो जानकि मे मातः परित्यजसि किं सुतम् ।
अन्धं च बधिरं मूकं परसाहाय्यजीविनम् ॥१०६॥
संप्रार्थ्य समये तुष्टं शय्यागारमधिष्ठितम् ।
भर्तारं कुशला देवि रक्षेमामित्यचिन्तयम् ॥१०७॥
मात्राऽपि स परित्यक्तः कथं जीवति वा सुतः ।
बहुभिर्बहुधा पुष्टो नाशमेव समृच्छति ॥१०८॥
अम्ब मां तु परित्यक्तुं धीः कथं ते प्रियात्मजे ।
कुपुत्रो भवति प्रायो न कुमातेति गद्यते ॥१०९॥
शुद्धात्मभिर्भवद्भिस्तु दुष्कृतं कृतमेव हि ।
अनन्यगतिकं त्यक्त्वा परिवारेण गन्तृभिः ॥११०॥
माता कीर्तिस्तु या नाथ रामदासस्य रक्षणात् ।
मूर्तीः प्रतिष्ठापयतः सेदानीं नाशिता पुनः ॥१११॥
पूजकं प्रेमभारेण वञ्चयित्वा कथं नु माम् ।
अन्तर्धानगतस्यापि युक्ता कीर्तिस्तु सा पुनः ॥११२॥
पितरावपि संत्यज्य गतानां युक्तमेव तत् ।
कथं भरतशत्रुघ्नावनघं त्यजतः स्म माम् ॥११३॥
मारुतात्मज यातोऽसि क्व वा वानरपुंगव ।
कथं त्वयि स्थिते कर्तुं साध्यं वा कर्म चेदृशम् ॥११४॥
राक्षसेष्वेव ते वीर्यं प्रभवत्यनिशं किमु ।
न तु राक्षसकल्पेषु मानुषेष्वपि शत्रुषु ॥११५॥
किमियं दर्शिता भक्तिर्नरश्रेष्ठे च राघवे ।
दुष्कृतिस्तु कथं साध्या त्वयि वीरे च पश्यति ॥११६॥
शतशीर्षेण पातालं नीते ते राघवे स्वयम् ।
प्रदर्श्य सुमहद्वीर्यं सुखसुप्तोऽसि सांप्रतम् ॥११७॥

कथं त्वमपि गन्ताऽसि दुस्त्यजं मां विहाय च ।
किं पादमूलं रामस्य परित्यक्तुमनीश्वरः ॥११८॥
अहं पुरुषकाराय राघवस्य महात्मनः ।
त्वयि विन्यस्तविस्रम्भः सुखेनासं मरुत्सुत ॥११९॥
परित्यजथ मां यूयं कथं वा भक्तवत्सलाः ।
अनन्यगतिकं दीनं पादमूलमुपाश्रितम् ॥१२०॥
प्रलपन्निति दीनात्मा विषीदन्विह्वलश्च सः ।
परिभ्रमति शोकेन कलुषीकृतचेतनः ॥१२१॥
जप्येशस्तु तमुद्वीक्ष्य प्रलापं सोदरस्य तु ।
लज्जाशोकसमाविष्टः कारुण्येनापि संकुलः ॥१२२॥
जहास तस्य पत्नी तु मूलं तस्याश्च दुष्कृतेः ।
प्रमत्ता कृतकृत्येव सुतं क्षिप्त्वा सरिज्जले ॥१२३॥
पौराः श्रुत्वा प्रनष्टं तज्जप्येशेनैव तां कृताम् ।
निश्चिन्वन्तो गदन्तश्च प्रत्यक्षं तमकुत्सयन् ॥१२४॥
साधोर्भक्तस्य शुद्धस्य त्यागराजस्य धीमतः ।
कथं ज्येष्ठस्त्वयं प्राप्तो दुर्वृत्तश्चाल्पजीवितः ॥१२५॥
कथं धरति धर्मात्मा प्राणानद्य विनाकृतः ।
प्राणभूतेन रामेण जानक्या लक्ष्मणेन च ॥१२६॥
कदा वा शृणुमस्तानि गीतानि मधुराण्यहो ।
संतुष्टहृदयेनाशु रचितानि तदा तदा ॥१२७॥
कदा वा प्रेक्षणीयो नस्तत्संघः सकुतूहलः ।
रामनाम स्तुवन्नित्यं गायन्नृत्यंश्च तद्गृहे ॥१२८॥
प्रनष्टं पुरसौन्दर्यं तथा चित्तस्य शान्तिभूः ।
श्रोत्राणां च परं भाग्यं नेत्राणाममृतं तथा ॥१२९॥
इत्थं प्रणयिनस्तस्मिन्नूचुश्च विविधा गिरः ।
तत्र तत्र च संगत्य विह्वलाः पुरवासिनः ॥१३०॥

चरितान्यर्थमिथ्यानि पूर्णमिथ्यानि वा पुनः ।
जगदुः पूर्ववृत्तानि कुभ्रात्राऽनुष्ठितानि च ॥१३१॥
जप्येशोऽपि तदा तेन भार्यया सह मार्गति ।
आर्तवद्विनिवृत्तार्थो दुःशीलो दुष्टधीरयम् ॥१३२॥
आमध्याह्नं मार्गयन्स कृच्छ्रादपि दृढव्रतः ।
न प्राप्तवांस्तदा रामं परिवारसमावृतम् ॥१३३॥
समाश्वस्तः शिष्यवाक्यैः प्रेयस्या भृशवत्सया ।
संप्रार्थ्यमानः स्नातश्च कर्माणि च तदाऽकरोत् ॥१३४॥
आहारे व्यवहारे वा न धीस्तस्य जगाम हि ।
विलपन्नेव दीनात्मा कृच्छ्रात्कालमनीनयत् ॥१३५॥
प्रलापा अपि गीतानि हृद्यानि निरगुस्तदा ।
शोको मोहोऽपि महतां लोकानामुपकारकः । १३६॥
तदाऽस्तुवंश्च जप्येशं तत्पत्नीमपि गार्हिताम् ।
कीर्तनैर्मोहिताः सर्वे रम्यैः शोकसमुद्भवैः ॥१३७॥
पुरान्तरागताश्चैव सशोकास्तमनुव्रताः ।
तथा कृच्छ्रगतं तं तु विमोक्तुं चाप्यनीश्वराः ॥१३८॥
इत्थं स्थिते च त्यागेशेऽनेके हि ऋतवो गताः ।
संवत्सरस्तदा पूर्णो वर्षर्तुः पुनरागमत् ॥१३९॥
एकदा त्यागराजस्तु विग्रहाणामलाभतः ।
रुरोद भृशमायस्तो निशायां जाग्रदेव सः ॥१४०॥
तेन शोकेन महता विलप्य बहुशस्तदा ।
सुष्वाप भूमौ दीनात्मा दुर्मना विह्वलश्च सः ॥१४१॥
अरुणे दिवमारूढे कुक्कुटैरभिनादिते ।
शीतवाते सुखस्पर्शे प्रबुद्धस्तूषसि स्वयम् ॥१४२॥
आजुहावाथ सर्वान्स स्वोच्चघोषैः कुतूहलात् ।
प्रबुद्धाः संभ्रमेणैव प्रययुस्तत्र संघशः ॥१४३॥

तदा प्रोवाच नृत्यन्स वर्षज्ञानन्दजं जलम् ।
राघवः स्वप्न आगत्य वचस्त्वेवमभाषत ॥१४४॥
त्यागराज समुत्तिष्ठ कावेरीं गच्छ मा चिरम् ।
तत्र द्रक्ष्यसि चाश्वत्थं जलाभिमुखमुन्नतम् ॥१४५॥
तत्रोदकं स्तब्धभूतं गाधमेवाभिवर्तते ।
प्रेक्षिष्यसे विग्रहांस्तान्सैकतान्तरवस्थितान् ॥१४६॥
इत्युक्तवान्स रामो मामित्युक्त्वा स त्वरान्वितः ।
प्रदुद्राव च कावेरमिनुयातः सकौतुकैः ॥१४७॥
दक्षिणाभिमुखाश्वत्थं तत्र दृष्ट्वा ससंभ्रमाः ।
सर्वे जले निमग्नाश्च स्वैनैवाहर्तुमुद्यताः ॥१४८॥
त्यागराजोऽपि धर्मात्मा निमग्नः सलिले शुभे ।
सैकते कलशहस्तः स क्षणादासाद्य चोद्गतः ॥१४९॥
सर्वे विग्रहहस्तं तं दृष्ट्वा तुष्टाः प्रचुक्रुशुः ।
विस्मृत्य गुरुसांनिध्यं ननृतुर्हृष्टचेतसः ॥१५०॥
ततः शिष्यः समुद्धृत्य वसनं पादमूलगम् ।
दृष्ट्वा सर्वाणि संतुष्टो भूषणानि करेऽग्रहीत् ॥१५१॥
त्यागराजश्च तान्दृष्ट्वा विग्रहान्पूर्ववत्स्थितान् ।
तोषाम्बुधिनिमग्नश्च न पारं प्राप्तवांस्तदा ॥१५२॥
तांश्च संगृह्य हस्तेन वक्षसाऽऽलिङ्ग्य सत्वरम् ।
गायन्गृहंताननयद्रारा मा इण्टिकीति च ॥१५३॥
तत्र पीठे प्रतिष्ठाप्य राघवं भक्तबान्धवम् ।
प्रदक्षिणशतं कृत्वा प्रमुमोद सहानुगः ॥१५४॥
वृत्तमेतदुपश्रुत्य पौरजानपदा जनाः ।
तुष्टुवुस्त्यागराजं च रामकारुण्यभाजनम् ॥१५५॥
सपत्नीकश्च जप्येशो दृष्ट्वैतद्भृशविह्वलः ।
कोपेन महताऽऽविष्टो ज्वलति साग्निसंनिभः ॥१५६॥

॥ इति श्रीत्यागराजचरिते सुन्दरेशार्यविरचिते
'विग्रहलाभो' नामैकादशः सर्गः ॥

## अथ द्वादशः सर्गः ।

काले प्रदोषे त्यागेशो गत्वा पञ्चनदालयम् ।
प्रणतार्तिहरं स्तौति गीतैः श्रोत्रमनोहरैः ॥१॥
इलत्रो प्रणतार्तीति गीतं गायन्महामतिः ।
भक्त्या च परया युक्तो ववन्दे शंकरं विभुम् ॥२॥
इत्थं ध्यानस्थिते तस्मिन्नुपविष्टो गृहाद्बहिः ।
ताम्बूलं सेवमानस्तु जप्येशः समवर्तत ॥३॥
श्रुत्वा तुरगशब्दं स समीपागमनोत्थितम् ।
विस्मयात्कौतुकेनापि ददर्शादरतो दिशः ॥४॥
योधाञ्शताधिकान्वीरान्सर्वायुधसमन्वितान् ।
उन्नतानुन्नतोष्णीषान्समायातान्ददर्श सः ॥५॥
अपश्यच्च समायातः पञ्च पट् तुरगांस्तदा ।
भूषणैरतुलैर्युक्तान्रम्यानुच्चैःश्रवःसमान् ॥६॥
सेनाग्रयायिनोऽद्राक्षीत्तत्पृष्ठेष्वप्यवस्थितान् ।
भीमान्भीमायुधान्धीरान्भीमवद्बलशालिनः ॥७॥
तेषां मध्ये महाकायं महाभरणभूषितम् ।
श्वेतं श्वेतेतरास्तीर्णं श्वेतचामरभूषितम् ॥८॥
पादे जानौ च पृष्ठे च मुखे पार्श्वे तथा गले ।
नवरत्नैः शोभमानैर्भूषणैः समलंकृतम् ॥९॥
महार्हास्तरणास्तीर्णं महारश्मिविभूषितम् ।
ददर्श विस्मितस्तत्र कौतूहलसमन्वितः ॥१०॥
ततो ददर्श तत्पृष्ठे स्थितं पुरुषपुंगवम् ।
गम्भीराध्यासितं तत्र गम्भीरहृदयं पुनः ॥११॥
रक्तच्छत्रेण दीप्तेन शोभितं रक्तचन्दनैः ।
परिधाय परं वस्त्रं परार्घ्यं परमाद्भुतम् ॥१२॥

गाम्भीर्येण प्रभावेण तथा परिजनेन च ।
शोभितं राजवत्तत्र सोऽपश्यद्भृशविस्मितः ॥१३॥
राजा वा राजकल्पो वा यत्र कुत्रापि गच्छति ।
इति संचिन्तयंस्तं तु पश्यन्नेवाभ्यवर्तत ॥१४॥
तुरगास्त्वरितं याताः पुरस्तस्य गृहस्य च ।
व्यतिष्ठन्तोज्ज्वलाङ्गास्ते वारयन्तो जनान्बहून् ॥१५॥
दृष्ट्वा तान्संभ्रमात्सोऽपि भयेन विकलीकृतः ।
उत्थाय विनयेनापि व्यतिष्ठत भयाकुलः ॥१६॥
अवारोहंस्तुरंगेभ्यो वपुष्मन्तो दृढव्रताः ।
दृढबद्धासिगोधास्ते दृढधन्वभिरावृताः ॥१७॥
तान्दृष्ट्वा स तु जप्येशः संविग्नहृदयः पुनः ।
प्रत्युद्गम्य प्रसाद्यापि प्रणनाम भयान्वितः ॥१८॥
एकः समागतेष्वाह जप्येशं विनयान्वितम् ।
गम्भीरनिनदेनापि तेषां यदभिकाङ्क्षितम् ॥१९॥
सचिवोऽयं महाभागः शरभोजिमहीपतेः ।
त्यागराजं तु संद्रष्टुं त्वरयाऽत्र समागतः ॥२०॥
इत्येतद्वचनं श्रुत्वा जप्येशो विमनेतनः ।
उवाच सेवकं तं तु मुखे कृत्वा करं स्वयम् ॥२१॥
त्यागराजस्तु मे भ्राता कुतो वा स तु मृग्यते ।
निर्वर्तयिष्ये तत्कर्म यदि तन्मयि कथ्यते ॥२२॥
विज्ञापितः सेवकेन सचिवस्तु महीपतेः ।
अवरुह्य तुरंगात्स गृहवेदिं पुनर्ययौ ॥२३॥
संभ्रान्तः स तु जप्येशो दृष्ट्वा मन्त्रिणमागतम् ।
भयगद्गदया वाचा प्रतिनन्द्य मनागिव ॥२४॥
कम्पमानकरो दूरे व्यतिष्ठत स विह्वलः ।
तं दृष्ट्वा भयविद्राङ्गं मन्त्री प्रोवाच सादरम् ॥२५॥

त्यागराजस्य किं भ्रातर्महनीयोऽसि सांप्रतम् ।
यो महाराजकारुण्यदृष्टेः पात्रं भविष्यसि ॥२६॥
महानभिनिवेशस्तु विन्यस्तस्तव सोदरे ।
यन्मामचोदयद्राजा सचिवं स्वयमेव नु ॥२७॥
विद्वांसो गानशास्त्रेषु सर्वशास्त्रेषु पण्डिताः ।
उपासते च राजानं वासवं किंनरा इव ॥२८॥
न रतिं कुरुते तेषु गीतीः श्रुत्वा मनोहराः ।
भ्रातुस्तव महाभागमुत्सुकस्त्वं दिदृक्षते ॥२९॥
महार्हाणि च वस्त्राणि भूषणान्यतुलान्यपि ।
दापयत्यद्य ते भ्रातुर्मयैव नियतात्मना ॥३०॥
पश्येमान्यम्बराण्यद्य भूषणानि महान्ति च ।
भ्रातरं भूषयित्वाऽद्य प्रेषयाशु मया सह ॥३१॥
इत्युक्त्वाऽदर्शयत्सर्वान्महार्हान्राजसंमतान् ।
दृष्ट्वा तानर्थलोभेन मोहमाप स मन्दधीः ॥३२॥
तान्दृष्ट्वा विस्मयाविष्टो मन्त्रिणं पुनरब्रवीत् ।
कृतार्थाः स्म वयं त्वद्य राज्ञां च भवतां मताः ।३३॥
स्वीकरोम्यद्य सचिवाः सर्वमेतदहं पुनः ।
भ्राता शिवालये व्यर्थं सायाह्ने भ्रमति प्रभो ॥३४॥
अचिरेण समागच्छेत्प्रेषयिष्यामि सांप्रतम् ।
एतानि भूषणान्यन्तर्नयाम्यद्य किमु प्रभो ॥३५॥
सचिवस्तु ततः प्राह लुब्धं तं मोहितं तदा ।
तस्य हस्ते त्विदं देयं न भ्रातरि न बन्धुषु ॥३६॥
इत्युक्तः सचिवेनापि भूषणेष्वेव सक्तधीः ।
तान्येव पश्यन्नास्ते स मस्पृहं सादरं तदा ॥३७॥
श्रुत्वा तु निनदं रम्यं घुष्टं राघवनाम तत् ।
जप्येशः प्राह सचिवं त्यागेशं पुनरागतम् ॥३८॥

रामनाम ततः श्रुत्वा श्रुतिगं समुदाहृतम् ।
पुलकाङ्कितसर्वाङ्गः सचिवस्तु बभूव सः ॥३९॥
अतिमात्रं हि माधुर्यं रामनाम्नोऽत्र वर्तते ।
हृदयं कम्पयच्चेतो मोहयत्परिसर्पति ॥४०॥
इत्थं च चिन्तयत्येव सचिवे भृशगर्विते ।
समीपमगमच्छात्रैस्त्यागराजः समावृतः ॥४१॥
दृष्ट्वा तुरंगान्योधांश्च गृहद्वारे व्यवस्थितान् ।
विस्मयेन समाविष्टो गृहद्वारं समाययौ ॥४२॥
अपश्यद्भ्रातरं तत्र स्वस्याभिमुखमागतम् ।
तं दृष्ट्वा विनतः पादौ ववन्दे नियतस्तदा ॥४३॥
जप्येशः सोदरं तं तु सादरं पुनरब्रवीत् ।
नाहं वृणे वन्दनं ते विनीतिं स्तुतिमेव वा ॥४४॥
बुद्धिमत्त्वं तु तेऽद्यैव निश्चीयेत महामते ।
पादमूलगता लक्ष्मीर्न तिरस्कारमर्हति ॥४५॥
श्रूयते हि महाराजः शरभोजिर्विशां पतिः ।
रक्षतीदं महद्राज्यं स्वदण्डेनापि तेजसा ॥४६॥
कारुण्यपूर्णा तद्दृष्टिर्यस्मिन्पतति सोदर ।
सद्यः स हि भवेद्राजा राज्यानामपि पालकः ॥४७॥
तथैव कोपसंदष्टो महीपतिरपि स्वयम् ।
सद्यो विनाशमायाति सपुत्रज्ञातिबान्धवः ॥४८॥
दुर्धर्षस्य नरेन्द्रस्य सचिवो बुद्धिसत्तमः ।
अद्यास्मद्विषयं प्राप्तः पूर्वपुण्येन चोदितः ॥४९॥
यं द्रष्टुमभिकाङ्क्षन्तश्चिरं पण्डितसत्तमाः ।
गृहद्वारेषु वर्तन्ते सोऽयमत्र समागतः ॥५०॥
यस्य प्रसादादल्पोऽपि महद्वित्तमवाप्य च ।
देववच्छोभते नित्यं सोऽयमत्र समागतः ॥५१॥

अद्यापि च महार्हाणि भूषणान्यम्बराणि च ।
अस्माकं दातुमुद्युक्तः करे निक्षिपति प्रभुः ॥५२॥
किमर्थं भजसे दैन्यं प्रतिगृह्णस्व नरर्षभ ।
राज्ञा संमानिता ये ते पूज्यन्ते च पृथग्जनैः ॥५३॥
प्राप्य संमानितान्राज्ञा पूजयिष्यसि राघवम् ।
विशेषद्रव्ययोगेण भक्तेभ्यश्च प्रदास्यसि ॥५४॥
समर्च्य रामं दातेति त्याज्यं किं ददति प्रभौ ।
युनक्ति योगे रामस्तु नरानेव न तु स्वयम् ॥५५॥
अर्चितो राघवो राजा राज्ञा त्वां योजयत्यहो ।
यदि त्वमवमन्येतमं राघवो ह्यभिभूयते ।५६॥
प्रतिनन्द्य महाराजमन्त्रिणं गृहमागतम् ।
यत्तद्ददाति तत्कर्म कुरु नित्यमतन्द्रितः ॥५७॥
इत्युक्तस्त्यागराजस्तु भ्रात्रा लुब्धेन भीरुणा ।
अविज्ञाय च यत्किंचित्सचिवस्य पुरो ययौ ॥५८॥
तमागतं ततो दृष्ट्वा सचिवः पूर्वमागतः ।
उत्थाय विनयात्तं च ववन्दे साञ्जलिस्तदा ॥५९॥
मन्त्रिणं तं ततो दृष्ट्वा त्यागराजो महामतिः ।
प्रतिनन्द्य यथान्यायं समुपाविशदर्हितम् ॥६०॥
ततोऽब्रवीत्तं सचिवः परिवारसमावृतः ।
संवृतं बहुभिश्छात्रैर्भ्रात्रा ज्येष्ठेन संगतम् ॥६१॥
त्यागराज महाभाग राज्ञस्त्वं श्रोत्रमागतः ।
पण्डितः सर्वशास्त्रेषु गान्धर्वे त्वसमस्त्विति ॥६२॥
पण्डितेनापि न कथं त्वया राजा स दृश्यते ।
उपासते हि सर्वेऽपि पण्डिताः पदकाङ्क्षिणः ॥६३॥
महात्मनि त्वय्यथैव कटाक्षाः प्रसरन्ति हि ।
कालज्ञ कालमाज्ञाय चात्मानं दर्शय प्रभुम् ॥६४॥

तवैतत्सुकृतं मन्ये दिदृक्षुस्त्वां विशां पतिः ।
संप्रार्थ्य गत्वा यो दृश्यः पण्डितैः स हि वाञ्छति ॥६५॥
यदि पश्यसि राजानं दातारं सकलश्रियाम् ।
नूनं प्राप्स्यसि वित्तानि ग्रामांश्च नगराणि वा ॥६६॥
न कृच्छ्रं साधितव्यं ते कर्तव्या द्वित्रगीतयः ।
सुलभा वाग्वशा यास्तु राज्ञः कीर्तिपरिष्कृताः ॥६७॥
बहूनि किल गीतानि वर्तन्ते रचितान्यहो ।
त्वद्भाग्यपरिणामेन रोचन्ते न महौजसे ॥६८॥
मया समर्पितं विद्वन्गृहीत्वा पारितोषिकम् ।
महाराजं तु संद्रष्टुं प्रस्थानमभिरोचय ॥६९॥
इत्युक्त्वा पुरतस्तस्य सर्वाण्याभरणानि सः ।
महार्हाणि च वस्त्राणि सुक्लृप्तानि चकार सः ॥७०॥
श्रुत्वा तद्वचनं घोरं नरस्तुतिभिरीडितम् ।
विव्यथे त्यागराजस्तु तान्यनालक्ष्य चेतसा ॥७१॥
कथं स्तुत्वा रघूत्तंसं शरण्यं सर्वजीविनाम् ।
तयैव जिह्वया दीनं स्तुवीय नरमद्य तु ॥७२॥
अहो नु खलु रामेण परीक्ष्ये मूढधीरहम् ।
अन्यथा तु कथं राज्ञो मामानाययितुं स्पृहा ॥७३॥
नृत्यत्येष मम भ्राता धनलोभविमोहितः ।
कथं न्वद्याशुभादस्मादुत्तरेयं सुसंकटात् ॥७४॥
इत्यालोच्य चिरं धीरः संप्रधार्य मनः सुखम् ।
निधिसालेति गीतं च गायति स्म यतात्मवान् ॥७५॥
अवोचदथ धैर्येण विनयेन च मन्त्रिणम् ।
उपशृण्वति च ज्येष्ठे निश्चितं मनसा तु यत् ॥७६॥
परितुष्टोऽस्मि यद्राजा मयि कारुण्यमास्थितः ।
भवताऽपि कृतस्नेहात्कृतज्ञोऽस्मि महामते ॥७७॥

नियोजयति यत्कर्तुं भवान्मां प्रीतिसंयुतः ।
क्षमस्व तदशक्यं मे कृच्छ्रेष्वपि च तिष्ठतः ॥७८॥
यदर्थेषु महान्स्नेहः सेव्यो राजा न संशयः ।
नाहं वृणे तदर्थं तु यदधःपातसाधनम् ॥७९॥
अवमन्तुं न हीच्छा मे भवन्तं वाऽपि भूपतिम् ।
न स्तौति राघवादन्यं जिह्वा मे मानवं पुनः ॥८०॥
पूज्यो मान्यश्च मे राजा भवानपि तथैव मे
उल्लङ्घिते शासने तु क्षन्तुमर्हथ मन्त्रिणः ॥८१॥
त्यागेशस्य वचः श्रुत्वा दारुणो लोभमोहितः ।
जप्येशो भृशमुद्विग्नस्तमपश्यद्दहन्निव ॥८२॥
इत्युक्तवन्तं त्यागेशं कोपेन कलुषीकृतः ।
मन्त्री प्रोवाच हस्तेन मार्जयञ्श्मश्रुसंचयम् ॥८३॥
धिक्त्वामद्य विनश्यन्तं दुर्मगं दुरनुष्ठितम् ।
दुरहंकृतिमत्तस्त्वं श्रुतो राज्ञा त्वमर्पिणा ॥८४॥
तस्मादेवाहमाज्ञप्तो नेतुं त्वामल्पकं स्वयम् ।
अवमत्य च राजानं को वा सुखमवाप्नुयात् ॥८५॥
प्रजा त्वमसि राज्ञस्तु यः सर्वकरणक्षमः ।
उल्लङ्घ्य शासनं तस्य कथं शक्ष्यसि जीवितुम् ॥८६॥
प्राणानपि परित्यज्य किं धर्मं परिरक्षसि ।
धर्माभिज्ञ महाराजस्तोत्रे पापं किमाप्स्यसि ॥८७॥
त्वत्तोऽपि पण्डितान्पश्य समर्थान्विदुषश्च ते ।
उपासीनास्तु राजानं मोदन्ते प्राप्य भूरिशः ॥८८॥
अपापकर्म तत्कृत्वा किं प्राप्यं भूरि वा धनम् ।
व्यवसायेन च स्थित्वा जीवितं नाश्यतां किमु ॥८९॥
एतयोरुभयोः किं वा परं पण्डित मन्यसे ।
ब्राह्मणे प्रीतियुक्तोऽहं पूर्वं मन्ये परं शुभम् ॥९०॥

शरीररक्षणायैव कुर्वन्तः पापमप्युत ।
अपापाः स्वर्गमायान्ति सन्तः साधुभिरीप्सिताः ॥९१॥
शरीररक्षणायैव रामो विव्याध ताटकाम् ।
पूतनादींस्तथा कृष्णो न किं ते धर्मचारिणः ॥९२॥
कथंचिदपि तु प्राणो रक्षितव्यो विपश्चिता ।
येनैव च परो लोको मोक्षश्चाप्यधिगम्यते ॥९३॥
अत्र किं विद्यते पापं राज्ञः स्तोत्रे महात्मनः ।
बुद्ध्या सम्यग्विचिन्त्यैव कुरु यत्सौख्यमात्मनः ॥९४॥
भयं जनयता चैव स्पृहां च धनसंचये ।
मन्त्रिणा पुनरित्युक्तस्त्यागराजस्तमब्रवीत् ॥९५॥
सर्वशास्त्रार्थविदुषा महाराजस्य मन्त्रिणा ।
नैतदुक्तं तु मां वक्तुं प्राकृतेनेव दुर्धिया ॥९६॥
महाराजस्य धर्मोऽसौ प्रजानां परिपालनम् ।
यथा तु मोक्षसाम्राज्यं प्राप्नुवन्ति मनीषिणः ॥९७॥
न चोद्धतेन दण्डेन नासमुद्रक्षितीश्वरात् ।
राज्ञो धर्मः प्रयात्यन्तं नैतच्चाविदितं विभोः ॥९८॥
कारयित्वा मया राज्ञो गुणकीर्तिसुविस्तृतिम् ।
कथं मां भूपतिर्मोक्षं प्रापयिष्यति सांप्रतम् ॥९९॥
उद्योगं च महाराजस्यासम्यक्चिन्तनागतम् ।
निवर्तयतु नीतिज्ञः सचिवो बुद्धिसत्तमः ॥१००॥
कथं मीपयते विद्वान्भवान्भीरुं पदे स्थितः ।
मशकं हन्तुमुद्युक्तो गजः किं बलमीप्सति ॥१०१॥
इत्युक्तवन्तं त्यागेशं रोषामर्षवशानुगः ।
परित्यज्य धिगित्येव मन्त्री गन्तुं प्रचक्रमे ॥१०२॥
विनश्यन्तं क्षणादद्य पश्यामि त्वां नराधम ।
राममक्तसुतो विप्र इति त्वयि दया कृता ॥१०३॥

इत्युक्त्वा स तु कोपेन तुरङ्गमधिरुह्य च ।
वेगेन पत्तनं प्रायादनुयातृभिरन्वितः ॥१०४॥
इत्थं गते च सचिवे सोपायनमुपागते ।
जप्येशः क्रोधताम्राक्षस्तं विव्याध दुरुक्तिभिः ॥१०५॥
मूढ त्वया सोदरेण कथं कृच्छ्रगतोऽस्म्यहम् ।
राज्ञस्तु सचिवः कोपान्महद्भि कलुषीकृतः ॥१०६॥
स एव दण्डयेदस्मान्मन्त्री राज्ञः प्रियो दृढः ।
अशिक्षयन्नेव कथं निवृत्त इति तर्कये ॥१०७॥
सोदरेण त्वया मूढ हतोऽस्मि व्यवसायिना ।
कथं वा सहते मानी स्वावमन्तृप्रजां नृपः ॥१०८॥
अवमान्य कथं ज्येष्ठं पितृवद् भृशवत्सलम् ।
तथा च नृपतिं धीरं सुखेन तु निवत्स्यसि ॥१०९॥
अद्यैव हन्मि त्वां मूढ राज्ञः प्रियचिकीर्षया ।
पश्यामि रामरक्षां ते यद्बलेनासि धृष्टधीः ॥११०॥
इत्युक्त्वा हस्तलब्धेन दण्डेनाताडयद् भृशम् ।
वार्यमाणोऽपि शिष्यैश्च नायं तत्कुरुते वचः ॥१११॥
भृशं संताडितो भ्रात्रा दुर्बलो बलिना तदा ।
विसंज्ञो विह्वलश्चार्तः पपात धरणीतले ॥११२॥
पतितं च तदा दृष्ट्वा चुक्रोधामर्षितो भृशम् ।
दण्डाघातस्रवद्रक्तधारासंप्लाविताङ्गकम् ॥११३॥
गच्छ वा नरकं पाप किमत्र वसता त्वया ।
आज्ञप्तः प्रार्थितो दीर्घात्कुरुषे न वचो मम ॥११४॥
भ्रातेति मन्यमानेन सोढमेतावदप्रियम् ।
को वा दुर्विषहं घोरं कर्म चैतत्सहिष्यते ॥११५॥
इत्युक्त्वा स तु निःश्वस्य पदा तमभिहत्य च ।
जगाम क्रोधवशगः शयनागारमार्तधीः ॥११६॥

गते तस्मिन्विषण्णश्च संत्रस्तश्छात्रसंचयः ।
तिष्ठंस्तं परिवार्यापि नेत्रैरश्रूण्यवर्षयत् ॥११७
श्रुत्वा तु घोरं तत्कर्म कमला प्रियमर्तृका ।
अभिदुद्राव वेगेन पार्श्वे पत्युर्मनस्विनी ॥११८॥
तथा शयानं भर्तारं विसंज्ञं पांसुषु प्रियम् ।
रुधिरक्लिन्नसर्वाङ्गं तपस्विनमिवाहतम् ॥११९॥
अश्रूणि च विवर्षन्तमनन्यगतिकं पुनः ।
उच्छ्वसन्तं च दीर्घेण श्वासेनायासितं कृशम् ॥१२०॥
दृष्ट्वा तु भयविद्धाङ्गी जीवितच्युतिशङ्कया ।
पार्श्वतः समुपाविश्य कुररीव रुरोद सा ॥१२१॥
हतमेव कथं हन्ति दैवं हतकमेव तत् ।
कथं वा सहते नैव किंचित्संतुष्टमात्मना ॥१२२॥
प्रनष्टराघवः पूर्वं प्राप्याद्य मुदमाप्तवान् ।
नूनं चासहमानेन प्रापितः प्राणसंकटम् ॥१२३॥
सोदरस्यापि यद्धस्तो विधेर्दुष्करकर्मणः ।
हन्तुं सहायः संप्राप्तः प्रहरिष्यति कैर्नवा ॥१२४॥
सुकृतेन भवान्नूनं सुखस्यैवोचितः स्वयम् ।
मम हस्तग्रहादेव दुर्भगाया गतो व्यथाम् ॥१२५॥
पिता मम महामेधः भवतो लग्नपत्रिकाम् ।
दृष्ट्वा सर्वोत्तमां मत्वा कीदृशं तोपमाप्तवान् ॥१२६॥
तयोत्तमेषु जातस्त्वं सर्वदाऽपि कथं विभो ।
कृच्छ्रेण वर्तसे नूनं मद्भाग्यस्य परिक्षयात् ॥१२७॥
सत्यवानपि सावित्र्या दीर्घमायुरवाप्य च ।
व्यपोह्य चान्ध्यं पित्रोश्च देववद् भुव्यराजत ॥१२८॥
अहं पुनर्ममालक्ष्म्या दुर्गतिं पत्युरार्पयम् ।
चिरं जीवामि पश्यन्ती तत्खेदमतुलं स्वयम् ॥१२९

विदीर्यते कथं त्वेतदायसं हृदयं न मे ।
असृग्धाराप्लुतं दृष्ट्वा विसंज्ञं पतितं प्रियम् ॥१३०॥
अहो नु खलु दैवज्ञैर्वञ्चिताऽसि शुभात्मभिः ।
यन्माङ्गल्यसमायुक्तां मामूचुः परलोकगाम् ॥१३१॥
कथं चेमं प्रपश्यामि संज्ञां प्राप्य समुत्थितम् ।
ताडनव्रणखिन्नोऽयं कदा वा सुखमाप्नुयात् ॥१३२॥
किं द्रक्ष्यामि मुखं पत्युः प्रसन्नं रामदर्शनात् ।
समाहूय च मां तोपाद्दर्शयद्राघवाननम् ॥१३३॥
इत्यादिभिश्च विविधै रुरोद करुणं तदा ।
मृगीव मृगमाबद्धं दृष्ट्वा संविग्नमानसा ॥१३४॥
शार्दूल इव बाणेन पातितः स तु विव्यथे ।
मन्दं मन्दं निःश्वसंश्च चेष्टमानो महीतले ॥१३५॥
अश्रूण्यवर्षंस्ते रक्तं क्षालयन्त इव स्रुतम् ।
दीर्घोच्छ्वासेन तु च्छात्रा वीजयन्त इवाभवन् ॥१३६॥
चिरात्स संज्ञां संप्राप्य संविग्नाङ्गश्च विह्वलः ।
सर्वानुदैक्षत त्रस्तः स्रवद्वारिविलोचनः ॥१३७॥
तदा तु कमला साश्रुर्दृष्ट्वा तं दीनचेतसम् ।
प्रावेपत भृशं विग्ना त्वज्ञातभवितव्यता ॥१३८॥
अपृच्छदथ भर्तारं वेपमानमुदीक्ष्य सा ।
असह्यवेदनः किं नु भवानद्याभिवर्तते ॥१३९॥
श्रुत्वा तु वचनं पत्न्याः प्रेमशोकाकुलाक्षरम् ।
समाश्वस्तस्तदा किंचित्स्वस्थो बोधमवाप सः ॥१४०॥
अक्षमश्च तदा वाचा वक्तुं पत्नीमपि प्रियाम् ।
ह्रिया शोकेन च प्लुष्टो व्यथितो भृशताडनात् ॥१४१॥
व्यजनैर्वीजयाञ्चक्रुश्छात्रास्ते विह्वलाङ्गकम् ।
चुक्रुशुश्च तमुद्वीक्ष्य श्रुत्वा पौराः समागताः ॥१४२॥

त्यागराजस्तु धर्मात्माऽबोधयत्संज्ञया स्वयम् ।
नेतुं रामस्य पार्श्वं तु स्वात्मानमकुतोभयम् ॥ १४३॥
ततश्च संनताः शिष्या दीनं संगृह्य पाणिभिः
रामसंनिधिमानाय्य पुरतः समवेशयन् ॥१४४॥
दृष्ट्वैव राघवं दीप्तं कारुण्यामृतवर्षिणम् ।
तत्याज शोकं मोहं च शनैरेव महायशाः ॥१४५॥
चिराद् ग्लानिसमाप्लुष्टो नाशक्नोदभिभाषितुम् ।
कृच्छ्रेण धैर्यमालम्ब्य सद्युपाविशदासने ॥१४६॥
ततो दृष्ट्वा मुखाम्भोजं राघवस्य गतव्यथः ।
चलमेलरगीतेन प्रार्थयामास राघवम् ॥१४७॥
मनसुलोनीति गीतेन तथाडिकिसुखं रिवति ।
गीतैस्तु प्रार्थयामास राघवं भक्तबान्धवम् ॥ १४८॥
तदा हि शिष्यस्त्वेकस्तु जप्येशं तस्य दुष्क्रियाम् ।
विगर्हमाणस्तत्रास्त भृशकोपाकुलान्तरः ॥१४९॥
त्यागराजस्तमाहूय समीपं शिष्यवत्सलः ।
इदमूचे महाप्राज्ञो ह्यनिच्छन्भ्रातृगर्हणाम् ॥१५०॥
मा रोषं भज सच्छील सोदरे मे त्वकारणात् ।
संचोदितस्तु दैवेन कुरुते ह्यवशो जनः ॥१५१॥
तञ्जापुरनिवासस्य पण्डितैः संस्तुतस्य च ।
आनेतुं मां कथं बुद्धिरुदपद्यत भूपतेः ॥१५२॥
यथा दैवेन तद्वाक्यं तथा भ्रातुर्ममाप्ययम् ।
उत्पादितो महाकोपः कस्तं निन्देत बुद्धिमान् ॥१५३॥
सुखदुःखानि जायन्ते पुण्यपापैः पुरा कृतैः ।
संचोदयमानं कुर्वन्तं को निन्देदल्पधीरपि ॥१५४॥
इत्युक्तो गुरुणा तेन लज्जया पुनराकुलः ।
शिष्यः शान्तिमवाप्याशु निवृत्तोऽभूत्तदाऽनघः ॥१५५॥

॥ इति श्रीमत्त्यागराजचरिते सुन्दरेशार्यरचिते
'भक्तिसमागमो' नाम द्वादशः सर्गः ॥

## अथ त्रयोदशः सर्गः ।

सचिवस्तु महाप्राज्ञः कोपेन महताऽऽवृतः ।
विवक्षुस्तस्य दुर्वृत्तं राज्ञो गेहं ययौ जवात् ॥१॥
तत्रापश्यत्समासीनं पर्यङ्के हेमचित्रिते ।
महीपतिं महात्मानं गन्धर्वमिव रूपिणम् ॥२॥
दीप्तिमद्भिर्महार्हैश्च भूषणैर्भूषिताङ्गकम् ।
महार्हवस्त्रसंवीतं महार्हमणिकुण्डलम् ॥३॥
रूपेण तेजसा चापि स्पृहणीयं भयानकम् ।
शोधितैर्योधवर्गैश्च मित्रैश्चापि सुरक्षितम् ॥४॥
वपुष्मन्तमिवानन्दं गाम्भीर्यमिव मूर्तिमत् ।
स्पृहणीयं सुहृद्वर्गैर्दुराधर्षं पृथग्जनैः ॥५॥
शरभोजिं महाराजं दृष्ट्वा दूरात्प्रणम्य च ।
तदाज्ञया समासीनो वचनं पुनरब्रवीत् ॥६॥
हन्तायं त्यागराजस्तु वर्तते च यथाश्रुतः ।
धृष्टधीरप्यमर्षात्मा दुर्विनीतश्च राक्षसः ।७॥
बहुशः प्रियमुक्तोऽपि कारणैर्बहुभिर्दृढः ।
स तु न प्रतिजग्राह वचनं मम मन्दधीः ॥८॥
कृच्छ्रेण यतमानोऽहं तमानेतुमिह प्रभो ।
तिरस्करोति मूढात्मा वानरः प्रार्थितो यथा ॥९॥
संप्रार्थितश्च ज्येष्ठेन बहुशो बहुधाऽपि सः ।
नेच्छत्येव समागन्तुं व्यवसायसमन्वितः ॥१०॥
सज्जोऽस्म्यथैव तत्कर्तुं यदाज्ञापयति प्रभुः ।
उल्लङ्घिते शासने तु प्रजां शिक्षितुमर्हति ॥११॥
इत्युक्तो मन्त्रिणा व्यग्रो भृशकोपातुरश्च सः ।
किंचिदुत्थाय पर्यङ्काद्दन्तान्कटकटाप्य च ॥१२॥

तिर्यगूर्ध्वं ततो दृष्ट्वा हस्तं हस्तेन पीडयन् ।
नेत्राभ्यां कोपरक्ताभ्यां स्फुलिङ्गानिव वर्षयन् ॥१३॥
पादौ भूम्यां दृढं क्षिप्त्वा श्मश्रूण्यामृश्य पाणिना ।
जगाद वाक्यं दुर्धर्षः शरभोजिः सुदारुणः ॥१४॥
किं त्यागेशेन मूढेन ममाज्ञा प्रतिहन्यते ।
कथं वा रक्षति प्राणान्मत्करद्वन्द्वनिष्ठितान् ॥१५॥
दुःसहा त्वियमेकैव राज्ञामाज्ञातिरस्कृतिः ।
वध्य एवाविचार्यैव यो वा स भवतु प्रभुः ॥१६॥
योधानाज्ञापय क्षिप्रं तं बद्ध्वाऽप्यानयन्त्विह ।
वधिष्यामि जडं सद्यो दुर्मगं दुरनुष्ठितम् ॥१७॥
पश्यन्तु लोकाः सर्वेऽपि फलं पापस्य कर्मणः ।
यस्तिरस्कुरुते मूढो राज्ञः संदेशमात्मनः ॥१८॥
इत्थमुक्ते महीपेन कोपेन च मदेन च ।
अहल्या तु तदा साध्वी प्रोवाच महिषी प्रियम् ॥१९॥
किमर्थमाहारयति राजा क्रोधमकारणम् ।
किं स निन्दति राजानमितरान्वा महात्मनः ॥२०॥
उपद्रवति किं साधूनकार्याण्यनुतिष्ठति ।
आनेतव्यः किमर्थं वा राज्ञा गेहं बलेन सः ॥२१॥
श्रूयते रामभक्तः स दृष्टाविति च राघवौ ।
नावमान्यः स शुद्धात्मा शान्तः संनियतेन्द्रियः ॥२२॥
यदि स्पृहा तु वित्तेषु पूर्वमेव स्वयं किल ।
अत्राभिगच्छेद्दीनात्मा पण्डिता इतरे यथा ॥२३॥
अनाकाङ्क्षितवित्तस्य किमस्माभिः प्रयोजनम् ।
किमर्थं वा समायाति मन्त्रिणा प्रार्थितोऽपि सः ॥२४॥
यद्यास्ते विरतो वित्ते स हि पूज्यो विशेषतः ।
समादिशति तं पूज्यं बद्ध्वाऽऽनेतुं कथं प्रभुः ॥२५॥

साधूनामवमन्तृत्वं च्यावयत्यपि वज्रिणम् ।
तस्मादाज्ञां पुरा दत्तां प्रतिसंहरतु प्रभुः ॥२६॥
इत्युदीर्य प्रियं साध्वी प्रेमाकुलहृदम्बुजा ।
प्रार्थयामास राजानं स्वसंदेशनिवर्तने ॥२७॥
शरभोजिर्महाराजो दीनां संप्रेक्ष्य तु प्रियाम् ।
बभाषे वचनं धृष्टं निश्चितं कर्तुमुद्यतः ॥२८॥
स्त्रीत्वाद्ब्रवीषि वचनं यन्न सम्यग्विचिन्तितम् ।
अनिवर्तितसंदेशः कथं वा भवति प्रभुः ॥२९॥
बहुच्छिद्रं राज्यतन्त्रं दुर्वहं दीनचेतनैः ।
धार्यते धृतदण्डेन न हि याच्ञाबलेन तु ॥३०॥
राजा यदाज्ञापयति युक्तं वाऽयुक्तमेव वा ।
प्रजाभिस्तत्तु कर्तव्यं न कर्तव्यं विमर्शनम् ॥३१॥
इत्थं चेत्पृथिवीमेनां पतिभिः शासितुं क्षमम् ।
बहुजातिसमाकीर्णां बहुचित्तैश्च संकुलाम् ॥३२॥
ज्ञात्वा न्यकृतसंदेशमुदासीने मयि स्थिते ।
लङ्घेयुर्मम सर्वेऽपि धैर्यमालम्ब्य शासनम् ॥३३॥
पालयिष्ये कथं भीरु राज्यमेतद्दुरासदम् ।
दुर्वृत्तमानवैर्जुष्टमहमाज्ञापनाक्षमः ॥३४॥
तस्मात्स त्यागराजोऽपि दण्ड्य एव न संशयः ।
महात्मा वा स भवतु योगी वा भक्तपुंगवः ॥३५॥
नाहं मन्ये साधुशीलं यो ज्येष्ठं नानुवर्तते ।
कथं भवति धर्मात्मा रामभक्तो विशेषतः ॥३६॥
इत्थमुक्त्वा प्रियां भार्यां विनीतं पार्श्वतः स्थितम् ।
संदिदेश पुराऽऽज्ञप्तं कर्तुं मन्त्रिणमेव सः ॥३७॥
सचिवस्तु तथेत्युक्त्वा यदा प्रस्थातुमुद्यतः ।
शरभोजिः पपातोर्व्यां दग्धगात्र इवाग्निना ॥३८॥

क्रोशंश्च घोरं चरणौ हस्तौ संचालयन्नपि ।
स्वेदक्लिन्नशरीरश्च कम्पमानशिराश्च सः ॥३९॥
धरण्यां वेष्टमानश्च लुठत्याकुलचेतनः ।
सर्वे विषण्णाः संत्रस्ता राज्ञो दृष्ट्वा विपर्ययम् ॥४०।
परामृशन्ती हस्तेन भर्तारं पृच्छति स्म सा ।
किमकाण्डेन तु भवाल्लुँठत्यत्र महाबलः ॥४१॥
भूताभिविष्टः किं नाथः प्रमत्तो व्याधिपीडितः
असह्यवेदनो जातः कथमद्य विशां पतिः । ४२॥
इत्युक्तः प्रियया दीनं विह्वलो विह्वलाङ्गकः ।
उदरे च स्वहस्तौ स दृढं बद्ध्वा जगाद ताम् ॥४३॥
क्षणेनैव शरीरं मे दहतीव विभावसुः ।
उदरे मूर्ध्नि मेऽसह्या व्यथा कृन्तति भामिनि ॥४४॥
इत्थं यदि मुहूर्तेन न जीवेयं व्यथाकुलः ।
त्वरयन्तेऽद्य मे प्राणा गन्तुं लोकान्तरं प्रिये ॥४५॥
वर्षतोऽश्रूणि नयने क्वथते हृदयं मम ।
क्षणादियं कथं प्राप्ता दुःसहा वेदना च माम् ॥४६॥
महीपतिरिदं प्रोच्य क्रोशन्दुः सहवेदनः ।
लुठति स्म सपर्यङ्के सर्वान्पश्यंश्च दारुणम् ॥४७॥
आनीताः सहसा वैद्या राजगेहं विचक्षणाः ।
मान्त्रिकाश्च महाप्राज्ञा मन्त्रशास्त्रविशारदाः । ४८।
त्रिस्कन्धपण्डिताश्चापि ज्योतिषप्रथितास्तथा ।
आयाताः प्रेक्ष्य राजानमजानत न किंचन ॥४९।
सुधातुकं तमूचुस्ते वैद्या धातुविशारदाः ।
अभूतापहतं चैव मान्त्रिका मन्त्रकोविदाः ।५०॥
सुकालमेवामन्यन्त ज्योतिषज्ञा नृपप्रियाः ।
अज्ञातमूलाः सर्वेऽपि पप्रमुः कलुषेन्द्रियाः ॥५१॥

तप्यते स महाराजो व्यथां सोढुमशक्नुवन् ।
क्रन्दल्लुँठन्श्वसंश्चापि चालयंश्चरणावपि ॥५२॥
परिवार्य स्थिता दीनं विषण्णाः प्रमदाजनाः ।
वर्षन्त्योऽश्रूणि नेत्राभ्यां चक्रन्दुर्दारुणं शुचा ॥५३॥
समानीतस्तदा राज्ञो गुरुर्भागवतोत्तमः ।
शान्तो जितेन्द्रियो विप्रः सर्वशास्त्रविचक्षणः ॥५४॥
स ददर्श भृशं तप्तं कीटं पद्भ्यामिवाहतम् ।
राजानं विह्वलं दीनं लुठन्तं घोरदर्शनम् ॥५५॥
ततः स चिन्तयामास कथमेतदुपस्थितम् ।
अस्य राज्ञः क्षणेनैव महाबलयुतस्य च ॥५६॥
समालोच्य चिरं साधुर्निश्चयं चाधिगत्य सः ।
प्रोवाच मन्त्रिणं दीनं वचनं पार्श्वतः स्थितम् ॥५७॥
नेयं व्याधिर्न भूतेन चाहविर्दुःसहा पुनः ।
महतस्त्वपराधेन संप्राप्तं प्राणसंकटम् ॥५८॥
राज्ञाऽपराद्धं कस्मै वा भक्ताय च महात्मने ।
अज्ञानाद्यदि वा ज्ञानाच्छंसत रहःस्थितम् ॥५९॥
प्रतीकारः क्षणात्कार्यः प्रयत्नात्प्रणवात्मभिः ।
विलम्बे भूपतिः प्राणसंशयं प्राप्नुयाद् ध्रुवम् ॥६०॥
इत्युक्तवति देवर्षिप्रतिमे च पुरोहिते ।
सत्यसंधस्तदा मन्त्री जगाद वचनं सुधीः ॥६१॥
क्षेत्रे पञ्चनदे पुण्ये त्यागराज इति श्रुतः ।
रामभक्तो गीतशास्त्रे पण्डितो वसति द्विजः ॥६२॥
समानाय्य गृहं चेदं गीतं कारयितुं नृपः ।
मामेव प्रेषयत्सद्यो नैच्छदागन्तुमत्र सः ॥६३॥
उल्लङ्घिताज्ञं तं विप्रं बद्ध्वाऽऽनेतुं कृतत्वरः ।
अथादिशच्च मां राजा नैतदन्यत्कृतं प्रभो ॥६४॥

श्रुत्वैतद्वचनं घोरं संविग्नः स पुरोहितः ।
किमध्यवसितं मन्त्रिन्राज्ञा वा पदगर्विणा ॥६५॥
इदमाश्चर्यभूतं मे कथं राजाऽद्य जीवति ।
तस्य धर्मात्मनो धैर्यादपकारं समादिशन् ॥६६॥
कुबेरो वासवो वाऽपि भक्तानां धर्मशालिनाम् ।
चिकीर्षुर्विप्रियं कर्म भसीभवति तत्क्षणात् ॥६७॥
इत्थमुक्त्वा रघूत्तंसं ध्यायन्मनसि राघवम् ।
हस्तेनामृशदङ्गानि राज्ञस्तु सदयं गुरुः ॥६८॥
तत्क्षणाद्विनिवृत्तार्तिः स्वस्थश्चाभून्महीपतिः ।
शान्तेन मनसा सर्वान्साश्चर्यं समुदैक्षत ॥६९॥
तुतुषुश्च ततः सर्वे विनष्टोपद्रवं नृपम् ।
अहल्या च निरीक्ष्याशु महिषी मुदमावहत् ॥७०॥
तत उत्थाय पर्यङ्काद्दृष्ट्वा गुरुमुपस्थितम् ।
सहसा विनयाच्चैव गौरवाच्च ननाम तम् ॥७१॥
आशीर्भिः प्रतिनन्द्यैनं राजानं प्रणतं गुरुः ।
बभाषे श्लक्ष्णमधुरैर्वचोभिः प्रीणयन्मुदा ॥७२॥
सुशिक्षितोऽपि धर्मात्मन्कथं वाऽविनयं प्रभो ।
कुरुषे साधुशीलेषु महात्मसु महीपते ॥७३॥
किमर्थं त्यागराजं तं रामभक्तं तपोधनम् ।
त्यक्तवित्तस्पृहं बद्ध्वा समानेतुं त्वमिच्छसि ॥७४॥
तेनैव पापयोगेन त्वया प्राप्तेदृशी दशा ।
असह्यमिममत्युग्रं प्राप्तवानस्युपद्रवम् ।७५॥
त्वरमाण इतो गत्वा प्रसादय महाधियम् ।
येनैव शान्तपापस्त्वं क्षेमं पुनरवाप्नुयाः ॥७६॥
आदिष्टो गुरुणा प्रेम्णा कारुण्यनिलयेन सः ।
जगाद विनयाच्चिह्नैर्लज्जयाऽवनताननः ७७॥

मौढ्येनैवेदमारब्धं क्षमस्व करुणानिधे ।
प्रसादये महात्मानं गत्वा पञ्चनदं स्वयम् ॥७८॥
इत्युक्तवन्तं राजानं शरभोजिं महामनाः ।
आशीर्भिरभिनन्द्यापि जगाम गृहमात्मनः ॥७९॥
उपस्येव तदा राजा प्रस्थानमभिरोचयन् ।
संदिदेश धनाध्यक्षं योधाधीशं च सत्वरः ॥८०॥
सज्जीकुर्वन्तु सर्वेऽपि प्रस्थानार्हांस्तुरंगमान् ।
अन्यानप्यखिलान्भक्तः संपूज्यानेतुमर्हति ॥८१॥
महाराजेन संदिष्टाः संघीभूय त्वरान्विताः ।
प्राप्ते चोपसि सज्जं तद्भूपतेस्ते न्यवेदयन् ॥८२॥
समलंकृत्य चात्मानं प्रयाणाभिमुखं प्रियम् ।
प्रार्थयामास भर्तारं स्वस्यानुगमनं प्रिया ॥८३॥
परितुष्टः प्रियावाक्यात्तया सह दृढव्रतः ।
आरुह्य शिबिकां भायान्मुक्तामणिविचित्रिताम् ।८४
पदातयः पुरो जग्मुः शरचापासिपाणयः ।
वादयन्तश्च पटहाननुजग्मुर्नराः शतम् ॥८५॥
तुरगाधिष्ठिता वीरा दृढबद्धासिखेटकाः ।
वपुष्मन्तश्च सोष्णीषा धरन्तः कवचं दृढम् ॥८६॥
जग्मुस्ते दर्शनीयाश्च पङ्क्तिशः पङ्क्तिशश्च ते ।
कथयन्तो राजसिंहापदानानि च भूरिशः ॥८७॥
मन्दं ययुर्गजाः पश्चात्सर्वभूषणभूषिताः ।
महार्हास्तरणोपेता महाघण्टाविनादिताः ॥८८॥
गाम्भीर्यात्परिणामेन चलत्पर्वतसंनिभाः ।
श्वेतचामरसंशोभिशूर्पश्रोत्रमनोहराः ॥८९॥
ततो ययुर्वादयन्तः श्रोत्रमानसहारिणः ।
तन्त्रीकृतान्रन्ध्रकृतांस्तथा चर्मकृतानपि ॥९०॥

ततः प्रभुर्महाराजः शरभोजिर्महामतिः ।
शिबिकां दर्शनीयां तामधिरुह्य ययौ मुदा ॥९१॥
अलंचकार सा साध्वी वामं तस्य महीक्षितः ।
वृत्रेहेव शचीयुक्तस्तदा भाति स्म भूपतिः ॥९२॥
पार्श्वयोरुभयोस्तस्य रक्षिणः सुदृढायुधाः ।
धीराश्च धृतिमन्तश्च योधा राज्ञः सुसंमताः ॥९३
पृष्ठतोऽनुययौ मन्त्री सेनाध्यक्षश्च वाहनैः ।
धनाध्यक्षोऽनुयाति स्म बहुकोशसमन्वितः ॥९४॥
पृष्ठं ररक्षुर्योधाश्च तुरंगाधिष्ठिताः पुनः ।
पदातयश्च ते वीराः पश्यन्तश्च चतुर्दिशः ॥९५
शरभोजिस्तदा राजा दिदृक्षुर्भक्तपुंगवम् ।
शंकरं द्रष्टुमुद्युक्तो मघवेव व्यराजत ॥९६॥
प्रयात्येवं महाराजे पूर्वानावेदितागमे ।
संभ्रमाच्च समुत्थाय मार्गावासा ववन्दिरे ॥९७॥
तदा तु वातमार्गेण राजागमनदर्शिनः ।
अतिजग्मुस्तदा शङ्कां जनाः पञ्चनदालयाः ॥९८॥
किमर्थं तु महाराजः संभ्रमेणोपसि प्रभुः ।
समायाति सपत्नीको ह्यनावेद्यैव केवलम् ॥९९॥
अनुचिन्त्य च पौरास्ते शङ्कमानाः सहस्रशः ।
बहून्वदन्तः कृच्छ्रेण हेतून्राजागतौ स्थिताः ॥१००॥
संभ्रान्ताश्च विषण्णाश्च संविग्नाश्च जनास्तदा ।
न्यवसन्गृहपृष्ठेषु भीतभीताश्च भूपतेः । १०१॥
शुश्राव च स जप्येशः शरभोजेः समागमम् ।
अकम्पत भृशं त्रासात्पूर्ववृत्तमनुस्मरन् ॥१०२॥
शशाप त्यागराजं स बहुधा विभ्रचेतनः ।
त्वत्राऽनेनाधुना घोरामापदं प्राप्तवानहम् ॥१०३॥

अहो नु खलु मूढेन नायं त्यक्तः स गर्वितः ।
निवसेयं गृहेऽन्यस्मिन्न च मां दण्डयेत्तदा ॥१०४॥
दुर्धर्षस्तु महाराजः कोपनो भृशमत्सरः ।
अपमानं कृतं भ्रात्रा कथं वा स सहिष्यते ॥१०५॥
मन्त्रिणा चोद्यमानस्तु स्वयमायाति सत्वरम् ।
न करिष्यति किं वाऽद्य तं मां च बलसंयुतः ॥१०६॥
अहो नष्टोऽस्मि मन्दात्मा भ्रात्राऽनेनाद्य गर्विणा ।
कथं वा जीवितुं शक्यं प्रेयस्या वा मयाऽपि वा ॥१०७॥
रामब्रह्मकुलं नष्टं दुर्विनीतसुतेन हि ।
केनाधुना तराम्येनं शोकाम्बुधिमुपस्थितम् ॥१०८॥
इत्येवं चिन्तयन्दीनो जप्येशो भयमोहितः ।
गृहद्वारमुपेत्याशु दृष्ट्वाऽन्तश्च न्यवर्तत ॥१०९॥
पाकागारे कवाटान्ते क्षणं तिष्ठति विह्वलः ।
गृहपृष्ठं द्रवन्याति निलीनः स भयाकुलः ॥११०॥
क्व लीनं मां न पश्येयुः सेवका इत्यमार्गयत् ।
प्रेयसीं विह्वलां वीक्ष्य ववर्षाश्रूणि विह्वलः ॥१११॥
संभ्रान्तहृदया साऽपि पत्युर्दृष्ट्वा कृशं मुखम् ।
कलभे पङ्कलग्ने तु करेणुरिव विव्यथे ॥११२॥
तदा मोवाच भर्तारमनुचिन्त्य सुमध्यमा ।
मा स्म भीतिस्त्वया कार्या राज्ञस्त्वद्गमनं प्रति ॥११३॥
सचिवस्तु पुराऽऽयातो ज्ञातवानस्मदीप्सितम् ।
गजमक्ति तथाऽस्माकं भ्रातुर्दीःशील्यवेदनात् ॥११४॥
आवेदयेच्च तन्नूनं सत्यवादी महौजसः ।
किमर्थं दण्डयेदस्मान्नियमांस्तस्य तु भूपतिः ॥११५॥
विहाय शोकं मोहं च भज धैर्यं महामते ।
गच्छ पूर्वं च तद्राज्ञे विज्ञापय कृतं त्वया ॥११६॥

लगुडं च करे कृत्वा ताडितो येन सादरः ।
दर्शयाद्य स्वयं राज्ञे स तु तुष्टो भवेत्कृती ॥११७॥
इत्युक्तः प्रियया धृष्टं किंचित्संप्राप्तधैर्यहृत् । *
प्रययौ धृतदण्डश्च राज्ञस्त्वभिमुखं ततः ॥११८॥
संविग्नाश्च ततः शिष्याः कम्पमानाङ्गयष्टयः ।
अशंसुस्त्यागराजाय तं महीपतिमागतम् ॥११९॥
मन्त्रिणा श्रुतवृत्तान्तः समायाति प्रकोपनः ।
शरभोजिर्महाराजः सर्वयोधसमावृतः ॥१२०॥
किं करिष्यति वा सोऽस्मान्भवन्तं वाऽत्यमर्षणः ।
पौरा भयेन संविग्ना गृहगृहे वसन्ति ते ॥१२१॥
संभ्रमागमने शङ्कां प्राप्तवन्तो मनीषिणः ।
व्यामियन्ते स्वकीये न कर्तव्ये भयमोहिताः ॥१२२॥
समागच्छति सेनाभिर्दुर्धर्षः शत्रुसूदनः ।
केन वाऽद्य भयादस्माचरेम गुरुपुंगव ॥१२३॥
भयकम्पितसर्वाङ्गा गद्गदैर्वचनैः पुनः ।
इत्यमुक्त्वा गुरुं दीप्तं व्यतिष्ठन्तातिविह्वलाः ॥१२४॥
तान्दृष्ट्वा भयविद्धाङ्गांस्त्यागराजः स्मिताश्चितः ।
इदमूचे महाप्राज्ञो महाभागवतोत्तमः ॥१२५॥
पुरुषं पुरुषा यूयं दृष्ट्वा किं भीतिमाप्नुथ ।
दृष्ट्वैव हस्तमितरं हस्तवत्किल भीरवः ॥१२६॥
कृतानां पुण्यपापानामनुभोक्तुं फलानि तु ।
जीवाः प्राप्य भुवं यान्ति फले भूते पुनर्दिवम् ॥१२६॥
जीवः स एकः संप्राप्तोऽनुभोक्तुं तत्फलानि तु ।
तथैवाहं च यूयं च भेतव्यं केन कस्य वा ॥१२८॥
कृतानि तेन पुण्यानि राज्यश्रीप्रापकाणि च ।
अनुभुङ्क्ते च तान्यद्य व्ययन्निव पुरार्जितम् ॥१२९॥

अन्ये तु सेवकास्तस्य कृत्वा तत्थापिकां कृतिम् ।
सेवकत्वमनुप्राप्य भुञ्जते तत्फलं स्वर्गम् ॥१३०॥
तस्माद्भेदो न जीवेषु सर्वे ह्येकगुणान्विताः ।
मा भैष्ट दृष्ट्वा राजानं मन्त्रिणं वा भटांस्तथा ॥१३१॥
उत्सवेषु यथा दृष्टा भूतास्त्वन्तर्नरोद्भूताः ।
तथा जीवैरुह्यमानाश्चरन्ति नृप सेवकाः ॥१३२॥
अस्माकं तु शुभं कर्म प्रारब्धं यदि वर्तते ।
राज्ञा वा तस्य योधैर्वा न साध्यं हन्तुमुद्यतैः ॥१३३॥
अशुभं यदि तत्कर्म हन्तुमस्मानलं तृणैः ।
एवं विचिन्त्य शास्त्रार्थं निर्भया भवत प्रभोः ॥१३४॥
यद्येष राजा हन्त्यस्मान्हीयते किमु वा ततः ।
प्रारब्धहीनो जीवोऽयं जन्मान्तरमुपैष्यति ॥१३५॥
तस्मात्त्यक्त्वा भयं मोहं धैर्यमालम्ब्य तिष्ठत ।
यद्यत्कर्म तु कर्तव्यं कुरुध्वं तान्यतन्द्रिताः ॥१३६॥
श्रुत्वैतद्वचनं सार्थं सर्वे त्यक्तभयाः पुनः ।
प्रातःकालोचितं कर्म चक्रिरे श्रद्धयान्विताः ॥१३७॥
त्यागराजश्च रामाय प्रातः क्षीरं निवेद्य च ।
माकेलरेति गीतेन संनिधौ गायति स्म सः ॥१३८॥
जप्येशो दण्डहस्तस्तु चलन्मन्दं पदात्पदम् ।
पुरोऽभिगच्छन्दीनात्मा मार्गे भीरुर्व्यतिष्ठत ॥१३९॥
अदूरादागतान्योधांस्तथा राज्ञः परिच्छदान् ।
वित्रास तदा दृष्ट्वा वृक्षमूले व्यलीयत ॥१४०॥
दृष्ट्वैनं भृशसंविग्नं कश्चित्पूर्वदिनागतः ।
योधो गृहीत्वा हस्तेन राज्ञे तस्मै व्यजिज्ञपत् ॥१४१॥
भ्राताऽयं त्यागराजस्य जप्येश इति नामतः ।
धृतदण्डेनैव भवान्स्वभावं वेत्तुमर्हति ॥१४२॥

यमदूतनिकाशेन योधेन स करे धृतः ।
पुरो ददर्श राजानं वैवस्वतमिवापरम् ॥१४३॥
भयविह्वलचेताः स कम्पमानकराङ्गुलिः ।
ऊचे सगद्गदं वाक्यं जप्येशो राजसंनिधौ ॥१४४॥
भ्राताऽहं त्यागराजस्य नाहं तमभिरोचये ।
तस्य कार्येषु विघ्नानि यथाशक्ति करोम्यहम् ॥१४५॥
विग्रहांश्च पुरा हृत्वा प्राक्षिपं च सरिज्जले ।
पुनः केनापि संप्राप्य पूजयत्यार्य सांप्रतम् ॥१४६॥
यदा तु मन्त्रिणाऽऽज्ञप्तः पूर्वंघ्नुर्नाकरोद्वचः ।
अनेन लगुडेनैव गात्रेतं तमताडयम् ॥१४७॥
मृत इत्येव निश्चिन्वन्सुखेनासं पुरा निशि ।
जीवन्नेव स मूढात्मा किंचित्कृच्छ्रेण वर्तते ॥१४८॥
न द्वेष्म्यहं तु राजानं करोमि वचनं प्रभोः ।
तमेवाद्यापराध्यन्तं भवाञ्शिक्षितुमर्हति ॥१४९॥
इत्थमुक्ते तदा राजा प्रहसन्नेव चाब्रवीत् ।
कुत्र ते त्यागराजस्तु दुरात्मा भृशगर्वितः ॥१५०॥
हस्तं कृत्वा मुखे सोऽपि विनयेन प्रणम्य च ।
गृहस्थितं त्यागराजमवोचत्पृथिवीपतिम् ॥१५१॥
गच्छ पूर्वमिति प्रोच्य विससर्ज च तं नृपः ।
पुनर्जातमिवात्मानं विसृष्टः समचिन्तयत् ॥१५२॥
त्वरमाणो महाराजस्त्यागराजगृहं ययौ ।
अनाहूतैव तान्पौराँल्लाजपोदकधारिणः ॥१५३॥
समागते महाराजे गृहद्वारं स धर्मवित् ।
प्रतिजग्राह तं हृष्टः सोपायनकरः स्वयम् ॥१५४॥
त्यागराजं तदा दृष्ट्वा भक्तिं मूर्तामिव स्थिताम् ।
विनयेनान्वितो भूपः शिबिकाया अवातरत् ॥१५५॥

ननाम च महाप्राज्ञस्त्यागराजं महीपतिः ।
प्रार्थयामास धर्मात्मा स्वापराधक्षमापणम् ॥१५६॥
तपोनिधे महाभाग क्षन्तुमर्हति मां भवान् ।
राज्याधिकारमत्तेन कृतमप्यविचिन्तितम् ॥१५७॥
विचक्षणोऽपि मे मन्त्री दुष्कृतेर्न न्यवारयत् ।
प्रसादनार्थं भवतः सपत्नीकः समागतः ॥१५८॥
इत्युक्तवन्तं राजानं पश्चात्तापाभितापितम् ।
प्रतिगृह्य च पाणिभ्यां त्यागेशस्त्विदमब्रवीत् ॥१५९॥
किमर्थं भजते दैन्यं राजा संपूर्णमानसः ।
पराक्रमेत न कथं प्रजासु पृथिवीश्वरः ॥१६०॥
अनेनैव मनःशान्तिं प्राप्नुवन्ति नराधिपाः ।
बहुच्छिद्रैर्दुर्वहाया भर्वारो राज्यसंपदः ॥१६१॥
इत्थं स बहुमानेन प्रोच्य राजानमादरात् ।
आनिनाय स तुष्टात्मा पूजागृहमनिन्दितम् ॥१६२॥
राजा तु दृष्ट्वा साश्चर्यं राघवं तेन पूजितम् ।
संतुष्टो मोहितस्तत्र लावण्येन च तेजसा ॥१६३॥
प्रणयेण कथाः पूर्वाश्चिरं संलपतोर्गतम् ।
माध्याह्निकक्रियाकालमनुचिन्त्याब्रवीन्नृपः ॥१६४॥
नेमं व्यर्थयितुं युक्तं भवतः कालमर्हितम् ।
आमन्त्रये पुनर्द्रष्टुं भवन्तं भक्तपुंगव ॥१६५॥
इत्युक्त्वा पुरतस्तस्य महार्हाण्यम्बराणि च ।
भूषणानि च रम्याणि तदा राजा न्यवेशयत् ॥१६६॥
तत्र तं प्रार्थयामास ग्रहणाय समाहितः ।
समग्रहीत्प्रीतिदानं परित्यज्य मुनीश्वरः ॥१६७॥
ततोऽभिवन्द्य नियतो राजा च महिषीसखः ।
पुरं प्रतस्थे मेधावी परिवारैः समावृतः ॥१६८॥

गते तस्मिन्महाराजे जप्येशमभिवाद्य सः ।
सर्वाणि च महाराजदत्तानि नियतो ददौ ॥१६९॥
गृहीत्वा तानि सर्वाणि लज्जयाऽवनतस्तदा ।
पश्चात्तापाभिभूतश्च द्वेषं तस्मिञ्जहौ ततः ॥१७०॥
ततः प्रभृति जप्येशः प्रेम तस्मिन्न्यवेशयत् ।
त्यागराजोऽपि धर्मात्मा मुमोद ज्येष्ठलालितः ॥१७१॥

॥ इति श्रीत्यागराजचरिते सुन्दरेशार्यविरचिते
'शरभोजिसमागमो' नाम त्रयोदशः सर्गः ॥

---

## अथ चतुर्दशः सर्गः ।

एकदा त्यागराजस्तु गायन्नास्त पुरः प्रभोः ।
बहिर्गेहे समासीनाः शिष्या गीतानि तेऽपठन् ॥१॥
नेत्रे निमीलयन्गीते लीयमानमनास्तदा ।
सुश्रुतिर्गायति स्मेति सर्वलोकदयानिधे ॥२॥
गृहकृत्येषु सुव्यग्रा पत्नी सा कमलाम्बिका ।
यदृच्छया गता तत्र द्वारं पूजागृहस्य तु ॥३॥
साऽपश्यद्विस्मयाक्रान्ता रामं सीतां च लक्ष्मणम् ।
तथा भरतशत्रुघ्नौ मारुतिं पुरतः स्थितम् ॥४॥
वर्षतः करुणासारं स्वभर्तरि कृपान्वितान् ।
शृण्वतः सुप्रियं भर्तुर्गीतानि मधुराणि च ॥५॥
साद्भुतं तांस्तु पश्यन्ती नेत्राभ्यां सुमनोहरान् ।
तस्थौ सा सुचिरं कालं पतिस्तन्नावबुध्यत ॥६॥
हृदये राघवं कृत्वा तद्गुणेषु मनः स्थिरम् ।
निर्व्यापारेन्द्रियैरास्त संयमीव स निश्चलः ॥७॥
बद्धाञ्जलिपुटा साध्वी भक्तिपूता मनस्विनी ।
आपिबन्तीव नेत्राभ्यां तस्थौ तद्रूपसंपदम् ॥८॥

चिरेण तु यदा भर्ताऽपश्यदुन्मील्य चक्षुषी ।
ते त्वन्तर्दधिरे क्षिप्रं विद्युज्ज्वलितवर्चसः ॥९॥
संभ्रमेण पतिं प्राप्य विह्वला विनतानना ।
समागत्य गतं रामं प्राह भ्रातृसमन्वितम् ॥१०॥
अनुन्मीलितनेत्रेण भवता नेक्षिताः प्रिय ।
अत्रागता महाभागा देवास्तेऽतुलवर्चसः ॥११॥
अहो नु खलु सौन्दर्यमहो तेजो दुरासदम् ।
किं वक्ष्ये मूढचित्ताऽहं तेषां तु परमां प्रभाम् ॥१२॥
उपविष्टः पुरो वायुसूनुः शुश्राव कीर्तनम् ।
तिष्ठन्रामो दत्तहस्तो जानक्यंसे मनोहरे ॥१३॥
पार्श्वे भरतशत्रुघ्नौ लक्ष्मणश्च महामतिः ।
अन्योन्यं श्लिष्टहस्तौ तौ गीतं ते शृणुतः प्रभो ॥१४॥
इत्युक्तवत्यां जायायां त्यागराजः सुदुःखितः ।
उवाच वचनं साध्वीं प्रियामप्रतिमां भुवि ॥१५॥
वञ्चितोऽस्मि महाभागे रामेण विदितात्मना ।
ददता दर्शनं तेऽद्य मीलिताक्षो ह्यहं स्थितः ॥१६॥
पापं कृतं मया साध्वि पूर्वजन्मनि दारुणम् ।
यदत्रोपस्थितास्तेऽपि न दृष्टाः पापकर्मणा ॥१७॥
कृतपुण्याऽसि भद्रं ते तान्प्रेक्षितवती यतः ।
श्लाघनीयाऽसि नारीणां कृतकृत्याऽसि सांप्रतम् ॥१८॥
इति श्रुत्वा वचः पत्युर्लज्जयाऽवनतानना ।
पतिं प्रदक्षिणीकृत्य नत्वा चान्तर्गृहं ययौ ॥१९॥
इत्थं काले गते पुण्यक्षेत्राणि स सिषेविषुः ।
संवृतः शिष्यसंघेन प्रतस्थे बुधसत्तमः ॥२०॥
ख्यातं भूलोकवैकुण्ठं सह्यजातीरशोभितम् ।
श्रीरङ्गं स ययौ यत्र शयानो हरिरर्च्यते ॥२१॥

तत्र दृष्ट्वा रङ्गनाथं तुष्टाव मधुसूदनम् ।
करुणा जूटवध्येति रङ्गशायीति कीर्तनैः ॥२२॥
ततः स पुण्यतोयेषु स्नात्वा च विधिवत्तदा ।
प्रेक्षमाणो दृष्टिरम्यक्षेत्राणि विचचार च ॥२३॥
गत्वा च सुचिरं कालं वेङ्कटाचलमाययौ ।
आरुह्य शिष्यवर्गेण शिखरं तस्य भूभृतः ॥२४॥
पुष्करिण्यां ततः स्नात्वा नियतो नियतेन्द्रियः ।
जगामालयमानन्दतुन्दिलश्च रमापतेः ॥२५॥
तत्रापश्यत्स्थितान्भीमान्रक्षकान्सेवकानपि ।
योधानिव युयुत्सूंस्तांस्तोत्रवेत्रकरान्बहून् ॥२६॥
चिरं सुविमृशन्कालं तेषां तु स्थितिकारणम् ।
सुधीर्विचक्षणः सोऽपि नाध्यगच्छद्विनिश्चयम् ॥२७॥
बलिनो भीमकायाश्च दण्डेनापि समन्विताः ।
चरन्त्यत्र किमर्थं वा शान्तिपूते महालये ॥२८॥
मधुश्च निहतः पूर्वं तथाऽन्ये रजनीचराः ।
जिघांसू राक्षसं कं वा प्रभुरेतैश्च वर्तते ॥२९॥
नैते तु पार्षदास्तस्य दृश्यन्ते राक्षसा इव ।
हन्तुं किमभिवर्तन्ते श्रीशं वाऽस्मांस्तदीप्सितान् ॥३०॥
इत्यादिभिस्तु विविधैश्चिन्तयित्वा महामतिः ।
वार्यमाणोऽपि वीरैस्तैः कृच्छ्रादुल्लङ्घ्य तान्ययौ ॥३१॥
प्रभोः श्रीवेङ्कटेशस्य पावनं प्राप्य संनिधिम् ।
तिरस्करणिकारुद्धदृष्टिर्नावाप दर्शनम् ॥३२॥
तेरतीयकरादेति गीतेन प्रार्थयत्प्रभुम् ।
करुणाम्बुनिधिस्तां तु निरास्थत्तत्क्षणात्तदा ॥३३॥
वेङ्कटेशं तथाऽपश्यद्दिव्यतेजःसमुज्ज्वलम् ।
मन्दस्मेरमुखाम्भोजस्पृहणीयाकृतिं प्रभुम् ॥३४॥

कर्पूरशोभिसर्वाङ्गं सर्वाभरणभूषितम् ।
नानाकुसुममालाभिः परिशोभितपार्श्वकम् ॥३५॥
तं दृष्ट्वा परितुष्टश्च तुष्टाव मधुसूदनम् ।
मध्यंदिने च संप्राप्ते वेङ्कटेशनिजुस्विति ।३६।
दृष्ट्वा स्तुत्वा तु सुप्रीतो वेङ्कटेशं मधुद्विषम् ।
अवातरच्च शिखराच्छिष्यवर्गसमावृतः ॥३७॥
मूलेऽपश्यत्सुन्दरेशं पूर्वस्निग्धं मनःप्रियम् ।
स्वस्यागमनमाकाङ्क्ष्य चिरेण स्थितमादरात् ॥३८॥
दृष्ट्वा तु तं परं मोदं प्राप प्रणयिनां वरः ।
चिराद्विरहितं बन्धुं प्राप्येव हृदयप्रियम् ॥३९॥
सोऽपूजयत्त्यागराजं स्नानपानादिभिः प्रियम् ।
कोवूरित्याह्वयं ग्रामं स्वस्य चानीनयत्ततः ॥४०॥
तत्रापि तं महार्हैश्च भोजनाच्छादनैः प्रियैः ।
सशिष्यं पूजयामास पूजार्हं प्रीतिसंभृतः ॥४१॥
न्यवसत्तत्र सुखितः सुन्दरेशेन पूजितः ।
चेतःप्रियस्य मित्रस्य सङ्गेनात्यन्तनिर्वृतः ॥४२॥
नित्यं शिवालयं गत्वा तुष्टाव परमेश्वरम् ।
सौन्दर्यनायिकायुक्तो यत्रास्ते सुन्दरेश्वरः ॥४३॥
कोरिसेविम्परारेति नम्मिवचिन नन्विति ।
तथा वसुधनीवण्टि कीर्तनैर्बहुभिस्तदा ॥४४॥
संपूजयन्नपि चिरं सुन्दरेशः प्रियातिथिम् ।
नोपालभत तृप्तिं स मोक्षकाङ्क्षीव सिद्धिभिः ॥४५॥
त्यागराजस्तु धर्मात्मा क्षेत्राटनकृतोद्यमः ।
प्रार्थयामास सुस्निग्धं प्रस्थानमभिरोचयन् ॥४६॥
सुन्दरेशस्तदा दीनो दृष्ट्वा गन्तुं समुत्सुकम् ।
प्रास्थानिकानि कृत्यानि विमनाः स तदाऽकरोत् ॥४७॥

शिबिकां सम्यगास्तीर्णां सज्जीकृत्य न्यवेदयत् ।
तामारोहत्त्यागराजो वाह्यमानां दृढैर्नरैः ॥४८॥
शिष्यास्तमन्वयुर्हृष्टाः पश्यन्तो नगराणि च ।
सरांसि सरितश्चैव कान्ताराणि विशेषतः ॥४९॥
इत्थं गच्छत्सु सर्वेषु संध्याकालोऽभ्यवर्तत ।
पतङ्गं मज्जयन्नब्धौ पतगान्निलयेषु च ॥५०॥
कृतस्नानास्तदा संध्यां विनिर्वर्त्य शुचौ जले ।
प्रतस्थिरे शुभात्मानो रामनामपरायणाः ॥५१॥
गच्छन्तो दूरमध्वानं काननं भीषणं महत् ।
विघ्नन्मार्गं समावृत्य ददृशुस्ते भयान्विताः ॥५२॥
शिबिकान्तःस्थितस्त्यागराजः संयमिनां वरः ।
ध्यानयोगमुपादाय न किंचिज्ज्ञातवान्पथि ॥५३॥
गुरवे तु तदा वक्तुमनीशा भयमोहिताः ।
शिबिकामन्वगुश्छात्राः सर्वतः परिशङ्किताः ॥५४॥
वर्षर्तुद्योतका मेघाः पीत्वा चाम्बुनिधेरपः ।
जगर्जुराकाशगताः पीत्वेव मदिरां नराः ॥५५॥
अम्बुधेरुद्गतश्चन्द्रस्तोयेन सह पीतवत् ।
मेघोदरान्तर्मग्नश्च ददृशे न पृथग्जनैः ॥५६॥
पतिं बद्ध्वा निवेश्यान्तस्तदीया ललना इव ।
तारका मेघवृन्दैस्तु ग्रस्यन्ते तत्र तत्र च ॥५७॥
मेघावृते शशाङ्के च तथा तारागणेष्वपि ।
तमसा चावृतं सर्वं क्रव्यादानां यथा मनः ॥५८॥
बहुशाखास्तथा वृक्षा वर्धयन्ति स्म तत्तमः ।
उदर्पा इव सिंहानां बद्धयो मानसं तमः ॥५९॥
शब्दस्तु शीतवातानां संविघ्नानकरोत्भरान् ।
मृगानुत्फुल्लनयनान्शार्दूलनिनदो यथा ॥६०॥

बभूवुस्तोयदा मन्दमश्रूणीव भयाकुलाः ।
दृष्ट्वा शरासनं पार्श्वे पत्युः स्वस्यासुरद्विषः ॥६१॥
इत्थं भयानके सर्वकान्तारे तमसाऽऽवृते ।
जग्मुस्ते भयविद्धाङ्गाः कलुषेन्द्रियमानसाः ॥६२॥
अचिरेण पपातोर्व्यां शिबिकायाः पुरस्तदा ।
घनशब्देन पाषाणः पर्वतादुद्धृतो महान् ॥६३॥
तेन शब्देन वित्रस्ताः पुरतो गन्तुमक्षमाः ।
दिशश्चलस्तस्तेऽपश्यन्सर्वे संजातसंभ्रमाः ॥६४॥
पपातान्यश्च पाषाणः पार्श्वे तेषां च पश्यताम् ।
वाहास्तु शिबिकां भूमौ न्यक्षिपन्भीरवो भृशम् ॥६५॥
शिष्या जातभयास्तत्र पूर्वमेवाभिशङ्किताः ।
कम्पमानेन गात्रेण व्यतिष्ठन्त विमोहिताः ॥६६॥
अथैक्षन्त दिशः सर्वाः संप्राप्तप्राणसंशयाः ।
संघं नराणां ददृशुर्दूरदेशे स्थितं तदा ॥६७॥
कृपाणपाणिभिर्जुष्टं तथा धृतशरासनैः ।
भीमायुधैर्भीमकायैर्बहुभिश्च समावृतम् ॥६८॥
धृत्वा बहूनि रूपाणि प्राप्तं वैवस्वतं यथा ।
मन्वानास्तान्भृशं घोरान्व्यलीयन्त विचेतसः ॥६९॥
ध्यानानन्दाम्बुधौ मग्नस्त्यागराजो महायशाः ।
न किंचिज्ज्ञातवांस्तत्र काननं वाऽपि तस्करान् ॥७०॥
अनन्यगतिकाश्छात्रा गुरुं ते तं व्यबोधयन् ।
सुरा इवासुरत्रस्ताः केशवं योगमास्थितम् ॥७१॥
प्रबुद्धस्त्यागराजस्तु दृष्ट्वा तान्संभ्रमाकुलान् ।
छात्रान्पप्रच्छ संविग्नांस्तेषां दैन्यस्य कारणम् ॥७२॥
शिष्या विज्ञापयामासुर्हस्तैः संदर्श्य तां दिशम् ।
तस्करानागतांस्तत्र भयविह्वलचेतसः ॥७३॥

श्रुत्वैतत्त्यागराजस्तु प्रत्युवाच स्मितेन च ।
अस्मान्संभत्स्य संताड्य कमर्थं प्राप्नुयुस्तु ते ॥७४॥
अर्थार्थिनस्तानाहूय दर्शयध्वं च शून्यताम् ।
येन प्रशान्तचित्तास्ते प्रतिगच्छेयुरन्ततः ॥७५॥
इत्थमुक्तास्तु गुरुणा विषीदन्तश्च लज्जया ।
पीडयन्तः स्वहस्तौ त इदमूचुस्तदा गुरुम् ॥७७॥
हन्त किं याऽद्य वक्ष्यामः सुन्दरेशो महद्धनम् ।
पूजायै रामचन्द्रस्य शिबिकायां न्यवेशयत् ॥७७
अस्माभिश्च निरस्तं तद्गुरुर्भक्तिस्तपोधन ।
स्नेहवात्सल्ययुक्तेन तेनेदं स्थापितं धनम् ॥७८॥
पूजार्थमेव रामस्य दत्तं स्निग्धेन तद्धनम् ।
नोक्तपूर्वं मयेनाद्य भवान्नः क्षन्तुमर्हति ॥७९॥
श्रुत्वैतद्वचनं घोरं शिष्याणां मूढचेतसाम् ।
उपास्थितमिदं घोरं तेनैवेति स विव्यथे ॥८०॥
पश्यताद्यार्थलोभस्य फलं पापमुपस्थितम् ।
भविष्यदशुभानेव यान्ति वित्तानि बालिशाः ॥८१॥
समाहूय च तेभ्योऽस्त्र देयमेतन्न संशयः ।
प्राप्नुयाम सुखं नैव यावत्तिष्ठेत्तदत्र हि ॥८२॥
इत्युक्ता गुरुणा ते तु विह्वलेन दयालुना ।
विनयेन ततः प्रोचुः प्रसाद्य च भयान्विताः ॥८३॥
यद्भवान्वक्ति चास्माभिस्तत्कार्यमविचारतः ।
तथाऽपि पूर्वं यद्वृत्तं तद्भवाञ्छ्रोतुमर्हति ॥८४॥
सुन्दरेशस्तु धर्मात्मा शुचिश्च भवतः सदा ।
पुनः पुनः प्रार्थयंश्च प्रोक्तवानिदमीप्सितम् ॥८५॥
संपादितं यद्द्रव्यं न्यायमार्गेण तन्मया ।
पात्रदानेन तद्द्रव्यं नान्यथा नाशमर्हति ॥८६॥

परीक्षते मयाग्निं नु यदाऽगायद्भयान्वितः ।
तदाऽस्माकं दृष्टिपथं गतौ सद्यः समागतौ ॥११३॥
समोन्नतौ समाकारौ समरूपौ समप्रभौ ।
समाभरणशोभाढ्यौ समचेष्टागती तथा ॥११४॥
स्पृहणीयाकृती दीप्तौ दृश्यालंकारशालिनौ ।
रक्तोष्णीषधरौ वीरौ रक्तनेत्रान्तशालिनौ ॥११५॥
रक्तजिह्वाधरौ रक्तनलिनाभपदान्वितौ ।
रक्तौ च भवतो दास्ये रक्तचन्दनरूषितौ ॥११६॥
धारयन्तौ कुण्डले च श्वेते ताराः स्वतेजसा ।
धिक्कुर्वाणौ दीप्तिमन्तौ नीलमारकतच्छवी ११७॥
कण्ठे धरन्तौ मालाश्च नवरत्नकृताः शुभाः ।
कौशेयं परिधायाङ्के हेमतन्तुविनिर्मितम् ॥११८॥
पीताम्बरे दधानौ च दृश्ये चोत्तरवाससी ।
निधायांसे च तूणीरं दधानौ चापसायकौ ॥११९॥
यज्ञोपवीतवच्चिह्नं धरन्तौ सेवकस्य च । -
विधाय करमेकं तु शिबिकायां त्वरान्वितौ ॥१२०॥
लोलयन्ताविषुं घोरमितरेण करेण च ।
सवत्सीरमुखेणापि पश्यन्तावसकृद्दिशः ॥१२१॥
नूपुरालंकृतौ पादौ शिरीषकुसुमोच्चयौ ।
संकोचाद्विक्षिपन्तौ च मन्दं मन्दं शिलासु च ॥१२२॥
हेमवर्णस्तयोरेको ह्यन्यो नीलाम्बुदद्युतिः ।
शुचिस्मितस्सदा नीलो हैमो रोषारुणाननः । १२३॥
उद्युक्तं बाणपाताय हैममक्ष्णा निवारयन् ।
लीलया च हसन्नीलः पृष्ठमन्वगमत्किल ॥१२४॥
पुनः पुनः कौतुकेन प्रेक्षमाणौ तवाननम् ।
तथा चास्मान्सुसंत्रस्तानागतौ क्व गताविह ॥१२५॥

उद्युक्तावपि तावस्मान्प्रहर्तुं हन्तुमेव वा ।
वाञ्छत्येव सदा द्रष्टुमस्माकं हतकं मनः ॥१२६॥
सुकृती तु भवान्नूनं येन प्राप्तौ दुरासदौ ।
सेवकौ चारुसर्वाङ्गौ दृष्टिमानसहारिणौ ॥१२७॥
श्रुत्वा तु वचनं तेषां कम्पमानशरीरकः ।
शिबिकाया अवप्लुत्य संभ्रमेण ननाम तान् ॥१२८॥
न नूनं तस्करा यूयं महाभागवतोत्तमाः ।
यद्दृष्टौ राघवौ साक्षाद्भवद्भिर्नरपुंगवौ । १२९॥
चिराय प्रार्थ्यमानौ तौ क्षणमेव पुरा मम ।
दृष्टेर्भूत्वाऽथ विषयौ तिरोधानं गतौ नृपौ ॥१३०॥
क्षणं संदर्शनं पत्न्या लब्धं च यतमानया ।
त्रियामकालं द्रष्टुं तौ कैर्मोन्यं सुकृतैः कृतैः ॥१३१॥
स्पृहणीया भवन्तोऽद्य द्रष्टारो नरसिंहयोः ।
वन्दनाद्भवतामद्य कृतार्थोऽस्मि नरोत्तमाः १३२॥
इत्युक्त्वा च भृशं दीनः पश्चात्तापाभितापितः ।
विह्वलश्च गतानन्दो विललाप भृशं तदा ॥१३३॥
अहो मूढेन नो पृष्टास्ते तु दूरानुयायिनः ।
किमर्थं मां प्रपश्यन्तो दूरेणागच्छथेत्यपि ॥१३४॥
मया किल महान्तौ तौ घोरकान्तारवर्त्मनि ।
शिलाकण्टकविद्धाङ्गौ संयातौ वाहकैः समम् १३५॥
अङ्के कुसुमसंकीर्णे जानक्या यत्तु लालितम् ।
वेदनां कां पदं प्राप्तं द्रवद्दाहानुयायि तत् ॥१३६॥
त्रिलोकीसृष्टिकर्तारौ त्रैलोक्यस्याप्यधीश्वरौ ।
कथं चिह्नं स्म धरतः सेवकस्य नरेश्वरौ ॥१३७॥
अधिष्ठायाद्य शिबिकां राजवन्मपि गच्छति ।
महात्मानौ कथं वीरौ पद्भ्यां यातौ नृपात्मजौ ॥१३८॥

परीक्षते भवान्किं नु यदाऽभायद्भयान्वितः ।
तदाऽस्माकं दृष्टिपथं गतौ सद्यः समागतौ ॥११३॥
समोन्नतौ समाकारौ समरूपौ समप्रभौ ।
समाभरणशोभाङ्गौ समचेष्टागतौ तथा ॥११४॥
स्पृहणीयाकृती दीप्तौ दृश्यालंकारशालिनौ ।
रक्तोष्णीषधरौ वीरौ रक्तनेत्रान्तशालिनौ ॥११५॥
रक्तजिह्वाधरौ रक्तनलिनाभपदान्वितौ ।
रक्तौ च भवतो दास्ये रक्तचन्दनरूषितौ ॥११६॥
धारयन्तौ कुण्डले च श्वेते ताराः स्वतेजसा ।
धिक्कुर्वाणौ दीप्तिमन्तौ नीलमारकतच्छवी ११७॥
कण्ठे धरन्तौ मालाश्च नवरत्नकृताः शुभाः ।
कौशेयं परिधायाङ्गे हेमतन्तुविनिर्मितम् ॥११८॥
पीताम्बरे दधानौ च दृश्ये चोत्तरवाससी ।
निधार्यासि च तूणीरं दधानौ चापसायकौ ॥११९॥
यज्ञोपवीतवच्चिह्नं धरन्तौ सेवकस्य च ।
विधाय करमेकं तु शिबिकायां त्वरान्वितौ ॥१२०॥
लोलयन्ताविषुं घोरमितरेण करेण च ।
स्त्रवत्क्षीरमुखेणापि पश्यन्तावसकृद्दिशः ॥१२१॥
नूपुरालंकृतौ पादौ शिरीषकुसुमोच्चयौ ।
संकोचाद्विक्षिपन्तौ च मन्दं मन्दं शिलासु च ॥१२२॥
हेमवर्णस्तयोरेको ह्यन्यो नीलाम्बुदद्युतिः ।
शुचिस्मितस्सदा नीलो हैमो रोषारुणाननः ।१२३॥
उद्युक्तं बाणपाताय हैममक्ष्णा निवारयन् ।
लीलया च हसन्नीलः पृष्ठमन्वगमत्किल ॥१२४॥
पुनः पुनः कौतुकेन प्रेक्षमाणौ तवाननम् ।
तथा चास्मान्सुसंत्रस्तानागतौ क्व गताविह ॥१२५॥

उद्युक्तावपि तावस्मान्प्रहर्तुं हन्तुमेव वा ।
वाञ्छत्येव सदा द्रष्टुमस्माकं हतकं मनः ॥१२६॥
सुकृती तु भवान्नूनं येन प्राप्तौ दुरासदौ ।
सेवकौ चारुसर्वाङ्गौ दृष्टिमानसहारिणौ ॥१२७॥
श्रुत्वा तु वचनं तेषां कम्पमानशरीरकः ।
शिबिकाया अवप्लुत्य संभ्रमेण ननाम तान् ॥१२८॥
न नूनं तस्करा यूयं महाभागवतोत्तमाः ।
यद्दृष्टौ राघवौ साक्षाद्भवद्भिर्नरपुंगवौ । १२९॥
चिराय प्रार्थ्यमानौ तौ क्षणमेव पुरा मम ।
दृष्टैर्भूत्वाऽथ विषयौ तिरोधानं गतौ नृपौ ॥१३०॥
क्षणं संदर्शनं पत्न्या लब्धं च यतमानया ।
त्रियामकालं द्रष्टुं तौ कर्माव्यं सुकृतैः कृतैः ॥१३१॥
स्पृहणीया भवन्तोऽद्य द्रष्टारो नरसिंहयोः ।
वन्दनाद्भवतामद्य कृतार्थोऽस्मि नरोत्तमाः १३२॥
इत्युक्त्वा च भृशं दीनः पश्चात्तापाभितापितः ।
विह्वलश्च गतानन्दो विललाप भृशं तदा ॥१३३॥
अहो मूढेन नो पृष्टास्ते तु दूरानुयायिनः ।
किमर्थं मां प्रपश्यन्तो दूरेणागच्छथेत्यपि ॥१३४॥
मया किल महान्तौ तौ घोरकान्तारवर्त्मनि ।
शिलाकण्टकविद्धाङ्गौ संयातौ वाहकैः समम् १३५॥
अङ्के कुसुमसंकीर्णे जानक्या यत्तु लालितम् ।
वेदनां कां पदं प्राप्तं द्रवद्वाहानुयायि तत् ॥१३६॥
त्रिलोकीसृष्टिकर्तारौ त्रैलोक्यस्याप्यधीश्वरौ ।
कथं चिह्नं स्म धरतः सेवकस्य नरेश्वरौ ॥१३७॥
अधिष्ठायाद्य शिबिकां राजवन्मयि गच्छति ।
महात्मानौ कथं वीरौ पद्भ्यां यातौ नृपात्मजौ ॥१३८॥

परीक्षते भवान्किं नु यदाऽभायद्भयान्वितः ।
तदाऽस्माकं दृष्टिपथं गतौ सद्यः समागतौ ॥११३॥
समोन्नतौ समाकारौ समरूपौ समप्रभौ ।
समाभरणशोभाङ्गौ समचेष्टागती तथा ॥११४॥
स्पृहणीयाकृती दीप्तौ दृश्यालंकारशालिनौ ।
रक्तोष्णीषधरौ वीरौ रक्तनेत्रान्तशालिनौ ॥११५॥
रक्तजिह्वाधरौ रक्तनलिनाभपदान्वितौ ।
रक्तौ च भवतो दास्ये रक्तचन्दनरूषितौ ॥११६॥
धारयन्तौ कुण्डले च श्वेते ताराः स्वतेजसा ।
धिक्कुर्वाणौ दीप्तिमन्तौ नीलमारकतच्छवी ११७॥
कण्ठे धरन्तौ मालाश्च नवरत्नकृताः शुभाः ।
कौशेयं परिधायाङ्के हेमतन्तुविनिर्मितम् ॥११८॥
पीताम्बरे दधानौ च दृश्ये चोत्तरवाससी ।
निधायांसे च तूणीरं दधानौ चापसायकौ ॥११९॥
यज्ञोपवीतवच्चिह्नं धरन्तौ सेवकस्य च ।
विधाय करमेकं तु शिबिकायां त्वरान्वितौ ॥१२०॥
लोलयन्ताविषुं घोरमितरेण करेण च ।
स्ववत्क्षीरमुखेणापि पश्यन्तावसकृद्दिशः ॥१२१॥
नूपुरालंकृतौ पादौ शिरीषकुसुमोच्चयौ ।
संकोचाद्विक्षिपन्तौ च मन्दं मन्दं शिलासु च ॥१२२॥
हेमवर्णस्तयोरेको ह्यन्यो नीलाम्बुदद्युतिः ।
शुचिस्मितस्सदा नीलो हैमो रोषारुणाननः ।१२३॥
उद्युक्तं बाणपाताय हैममक्ष्णा निवारयन् ।
लीलया च हसन्नीलः पृष्ठमन्वगमत्किल ॥१२४॥
पुनः पुनः कौतुकेन प्रेक्षमाणौ तवाननम् ।
तथा चास्मान्सुसंत्रस्तानागतौ क्व गताविह ॥१२५॥

सर्वथा तु कृतं पापं मया विक्रयबुद्धिना ।
कथं युक्तं मया प्राप्तुं नरवाहं प्रियादपि ॥१३९॥
कार्यमेतत्करिष्यन्तं मामचोदयतां ध्रुवम् ।
नैवारोक्ष्यामि शिविकामधन्योऽहमितः परम् ॥१४०॥
इत्यादिभिश्च विविधैर्दीनदीनः प्रलप्य च ।
तस्करान्बहुमानेन समुदैक्षत बुद्धिमान ॥१४१॥
अदृष्टावेव तौ ज्ञात्वा त्यागराजेन तस्कराः ।
विस्मिताः पुनरूचुस्तं विनीता गतसाध्वसाः ॥१४२॥
न न्याय्यं शोचितुं नाथ यद्भवान्भक्तपुंगवः ।
अन्यथा तु कथं साध्यं प्राप्तुं तौ स्वस्य रक्षकौ ॥१४३॥
तयोर्दर्शनपुण्येन भवतश्च महागिरा ।
वयं पूता महाभाग साधुशीला अभूम हि ॥१४४॥
अस्मान्विधेयान्स्वीकृत्य चानुगृह्णातु पण्डितः ।
न त्याज्या भवता नाथ पादमूलमुपागताः ॥१४५॥
इत्युक्त्वा विह्वला दीनाश्चरणौ ते ववन्दिरे ।
पुनः पुनस्तमेवार्थं प्रार्थयामासुरन्ततः ॥१४६॥
वहन्तः शिबिकां नाथ करिष्यामश्च सत्क्रियाम् ।
साधयामश्च तान्सर्वान्यद्वक्ति भगवान्गुरुः ॥१४७॥
इत्थं प्रार्थयतस्तांस्तु कारुण्यादानृशंस्यतः ।
नाकाङ्क्षदनु नेतुं तु त्यागराजो महामतिः ॥१४८॥
ज्ञात्वा तस्य च सौशील्यं कारुण्यं साधुचित्तताम् ।
सर्वे प्रीतिं च संजग्मुस्तस्यानुगमने स्पृहाम् ॥१४९॥
न दुर्भरा भविष्यामो भवतः सत्यसंगर ।
न्यायवृत्त्यार्जितैः सौम्य वर्तयिष्यामहे वयम् ॥१५०॥
इति संप्रार्थितस्तैस्तु दृढचित्तैः शुभान्वितैः ।
दाक्षिण्यादनुमेने तानन्गन्तुं नरोत्तमः ॥१५१॥

समाहूय ततः पार्श्वे शिबिकायानवाहकान् ।
इदमूचे त्यागराजो निवर्तनकृतोद्यमः ॥१५२॥
भवद्भिः सुकृता यत्नैर्भर्तुराज्ञाविशेषतः ।
निवर्तध्वं शिबिकया येनाहं तोषमाप्नुयाम् ॥१५३॥
मम नियं सुन्दरेशं वदन्तु प्रियसेवकम् ।
अनामयं च कुशलं पृष्टवानहमित्यपि ॥१५४॥
भवद्भिरपि यद्दृष्टं कान्तारे गहने पुनः ।
निवेदितव्यं स्निग्धाय श्रुत्वा तोषमवाप्स्यति ॥१५५॥
अन्ततस्तस्य वक्तव्यं परिघूनं भृशं तु माम् ।
वाहारूढं नरव्याघ्रौ यत्पद्भ्यामनुजग्मतुः । १५६॥
तेनेदं निश्चितं विद्वन्नारोक्ष्यामि च वाहनम् ।
प्रतिगृह्णीष्व शिबिकां मा क्रोधं गच्छ तन्मयि ॥१५७॥
इत्युक्तवन्तं कृच्छ्रेण भर्तुस्तु प्रियकारिणः ।
संप्रार्थ्यापुर्यदा मोघं निवृत्ताः स्वस्य पत्तनम् ॥१५८॥
त्यागराजश्च धर्मात्मा स्तेनभक्तैर्न्यागतैः ।
पूर्वानुयायिभिश्छात्रैः प्रतस्थे स्नानकर्मकृत् ॥१५९॥
ततः काञ्चीं समासाद्य दृष्ट्वा निखिलदेवताः ।
विनतासुतवाहेति वरदेशं समस्तवीत् ॥१६०॥
ततः क्षेत्राणि रम्याणि प्रेक्षमाणोऽतुलप्रभः ।
स्नात्वा पुण्येषु तीर्थेषु जगाम स्वपुरं मुदा ॥१६१॥

॥ इति श्रीमत्त्यागराजचरित्रे सुन्दरेशार्यविरचिते 'क्षेत्राटनम्' नाम चतुर्दशः सर्गः ॥

---

## अथ पञ्चदशः सर्गः ।

पूजयन्राघवं देवं भ्रात्रा च प्रतिनन्दितः ।
विविधानि च गीतानि गायन्कालमयापयत् ॥१॥
एकदा प्रेयसीं भार्यां वयोवृद्धां पतिव्रताम् ।
असह्यवेदनां दृष्ट्वा भृशं शोकाकुलोऽभवत् ॥२॥
उपविश्य च तत्पार्श्वे हस्तेनामृश्य मस्तकम् ।
विवर्णं वदनं दृष्ट्वा प्राह स्म विनयान्विताम् ॥३॥
मन्येऽहं राघवो देवस्त्वां निनीषति सादरम् ।
सांतानिकं महाभागः पतिदेवामपांसुलाम् ॥४॥
सीता तनूजा भर्तारमखिलाण्डपुरे परम् ।
अनुकूलं प्रियं प्राप्य मोदते पतिसंमता ॥५॥
परत्र गमने शोकं मा गमः पुण्यशालिनि ।
राघवः करुणाम्भोधिर्नूनं त्वाऽनुग्रहीष्यति ॥६॥
यदा वधूरिदं गेहमागता वरवर्णिनि ।
मनःशान्तिश्च तोषश्च तदाप्रभृति वर्धते ॥७॥
मातेव सोदरीवच्च दासीवच्च सखीव च ।
भासमाना यथाकालमकरोर्मां सुनिर्वृतम् ॥८॥
मया नाथेन चाप्तानि दुःखानि विविधानि च ।
बन्धुवर्गसमुत्थानि क्षमस्व करुणालये ॥९॥
इत्युक्तवन्तं भर्तारं शोकाकुलमनाथवत् ।
उवाच गद्गदैर्वाक्यैः कमला विमला तदा ॥१०॥
लोकान्तरस्य संप्राप्तिः सौमङ्गल्येन योषिताम् ।
स्पृहणीयाऽपि दूयेऽहं चिन्तयन्ती भवत्क्रमम् ॥११॥
यूना तु पतिना दत्तान्भुक्त्वा भोगाननुत्तमान् ।
परित्यजेत्कथं साध्वी जराजर्जरितं पतिम् ॥१२॥

भवानद्य जराजीर्णः कम्पमानशिरोऽङ्गकः ।
करोति निखिलं कर्म परसाहाय्यमाश्रितः ॥१३॥
कथं त्यजेयं वा नाथ भवन्तं विह्वलाङ्गकम् ।
परिज्ञाय मनोवृत्तिं को वा परिचरिष्यति ॥१४॥
न विप्रियं कृतं नाथ मनसा वचसाऽपि वा ।
स्त्रीत्वाच्चपलचित्तत्वात्कृतं चेत्क्षमतां भवान् ॥१५॥
इत्युक्तवत्यां भार्यायां प्रियभार्यस्तदाऽनघः ।
रुरोदान्तर्भृशं विप्रो वर्षन्नश्रूण्यधृष्टधीः ॥१६॥
क्षणेनैव च तत्रत्याश्चुक्रुशुर्दीनचेतनाः ।
बुबोध च तदा सोऽपि गतप्राणां प्रियां सतीम् ॥१७॥
दृष्ट्वा तां प्रेयसीं दीनो गतासुं कलुषेन्द्रियः ।
उच्चैरुरोदाश्रुमुखो हृतसर्वस्ववत्तदा ॥१८॥
हतां मृगवधूं दृष्ट्वा मृगवत्क्रन्दति स सः ।
भोगीव चेष्टते भूमौ कृपाणेन द्विधाकृतः ॥१९॥
चिरेण बन्धुवर्गैश्च मित्रैः पौरैश्च नैगमैः ।
स्मारितो जीवतत्त्वानि करोति स्मान्तिमक्रियाम् ॥२०॥
परिज्ञातात्मतत्त्वोऽपि जानानो नश्वरं जगत् ।
भार्यागुणसमाकृष्टो विष्यथे स ऋतून्बहून् ॥२१॥
इत्थं गच्छति काले स पश्यन्दौर्बल्यमात्मनि ।
मां नेष्यते कदा राम इति चिन्तापरोऽभवत् ॥२२॥
माध्यंदिनानि कर्माणि कर्तुं तां पुण्यनिम्नगाम् ।
कदाचित्प्रययौ श्वेतमूर्धजः कम्पिताङ्गुलिः ॥२३॥
आगमश्रमखिन्नोऽयं निषसाद शिलातले ।
निधिप्य कलशं पार्श्वे निशश्वास च विह्वलः ॥२४॥
वत्सेत्याह्वानशब्दं तु श्रुत्वा कर्णरसायनम् ।
चलसः कङ्कमोऽपश्यत्सांतुकाक्रान्तमानसः ॥२५॥

व्याप्नुवन्नपि सर्वाणि भुवनानि स्वमूर्तिभिः ।
आगमोक्तविमानाधोलिङ्गाकृतिरहं स्थितः ॥५२॥
मत्पूजनात्तु भक्तानां यन्मूर्त्य्यं युक्तमेव तत् ।
कथं त्वस्तु स्तुतः श्रेष्ठ इतीदं विस्मयावहम् ॥५३॥
भक्तत्रिके वरं लिङ्गमेकेनापि स्तुतं विदुः ।
स्तुतस्त्वया च भक्तेन चतुर्भिरहमीडितः ॥५४॥
प्रीतोऽस्मि कीर्तनैस्तेऽद्य त्यागराज महामते ।
भक्तिमान्स्थापितो लोकस्तारितो भवसागरात् ॥५५॥
कलौ युगे पवित्राणि गीतानि तव सुव्रत ।
भागीरथीजलानीव प्लावयिष्यन्ति भूतलम् ॥५६॥
आचन्द्रार्कं भविष्यन्ति तर्पकाणि मनीषिणाम् ।
गीतानि चित्तपापौघक्षालकानि तपोधन ॥५७॥
गीतानि ये च गायन्ति ये च शृण्वन्ति भक्तितः ।
ये ते समाधिं द्रक्ष्यन्ति ते लप्स्यन्ते मनोरथान् ॥५८॥
पुत्रकामास्तु पुत्रांश्च धनकामा धनं तथा ।
आयुष्कामास्तथाऽयुश्च दीर्घं प्राप्स्यन्ति मानवाः ॥५९॥
एतदाकर्ण्य वचनं मन प्रह्लादकं परम् ।
त्यागराजो विनीतात्मा जगादेदं वचो मुदा ॥६०॥
शंभुः क्षिप्रप्रसादीति वचनं सत्यमेव तत् ।
यद्भवान्परितुष्टात्मा वरदोऽस्वल्पपूजया ॥६१॥
प्रभुणानुगृहीतोऽस्मि प्रसन्नेन दयाब्धिना ।
यत्काङ्क्षितं तु तत्सिद्धं भवद्वचनगौरवात् ॥६२॥
एवं ब्रुवति ते सर्वे क्षणादन्तर्हिता ययुः ।
संपरिज्ञातवेद्यः स माध्याह्निकमथाकरोत् ॥६४॥
चिन्तयन्वचनं तेषां विस्मितश्च गतक्लमः ।
हस्तौ संचालयन्वेगाद्गेहं पुनरुपागमत् ॥६५॥

व्याप्नुवन्नपि सर्वाणि भुवनानि स्वमूर्तिभिः ।
आगमोक्तविमानाधोलिङ्गाकृतिरहं स्थितः ॥५२॥
मत्पूजनात्तु भक्तानां यच्छ्रैष्ठ्यं युक्तमेव तत् ।
कथं वस्तु स्तुतः श्रेष्ठ इतीदं विस्मयावहम् ॥५३॥
भक्तत्रिके वरं लिङ्गमेकेनापि स्तुतं विदुः ।
स्तुतस्त्वया च भक्तेन चतुर्भिरहमीडितः ॥५४॥
प्रीतोऽस्मि कीर्तनैस्तेऽद्य त्यागराज महामते ।
भक्तिमान्स्थापितो लोकस्तारितो भवसागरात् ॥५५॥
कलौ युगे पवित्राणि गीतानि तव सुव्रत ।
भागीरथीजलानीव प्लावयिष्यन्ति भूतलम् ॥५६॥
*आचन्द्रार्कं भविष्यन्ति तर्पकाणि मनीषिणाम् ।*
गीतानि चित्तपापौघक्षालकानि तपोधन ॥५७॥
गीतानि ये च गायन्ति ये च शृण्वन्ति भक्तितः ।
ये ते समाधिं द्रक्ष्यन्ति ते लप्स्यन्ते मनोरथान् ॥५८॥
पुत्रकामास्तु पुत्रांश्च धनकामा धनं तथा ।
आयुष्कामास्तथाऽयुश्च दीर्घं प्राप्स्यन्ति मानवाः ॥५९॥
एतदाकर्ण्य वचनं मन प्रह्लादकं परम् ।
त्यागराजो विनीतात्मा जगादेदं वचो मुदा ॥६०॥
शंभुः क्षिप्रप्रसादीति वचनं सत्यमेव तत् ।
यद्भवान्परितुष्टात्मा वरदोऽस्वल्पपूजया ॥६१॥
प्रभुणानुगृहीतोऽस्मि प्रसन्नेन दयाब्धिना ।
यत्काङ्क्षितं तु तत्सिद्धं भवद्वचनगौरवात् ॥६२॥
एवं ब्रुवति ते सर्वे क्षणादन्तर्हिता ययुः ।
संपरिज्ञातवेद्यः स माध्याह्निकमथाकरोत् ॥६४॥
चिन्तयन्वचनं तेषां विस्मितश्च गतश्रमः ।
हस्तौ संचालयन्वेगाद्गेहं पुनरुपागमत् ॥६५॥

आसाद्य राघवं देवं प्रणम्य च सहस्रशः
स्तुत्वा संपूज्य विधिवत्प्रतस्थे स गृहाद्बहिः ॥६६॥
त्वचं भोगीव स श्वेतं तत्याज वसनं शुभम् ।
गार्हस्थ्येन सहैवाशु सोपवीतं जहौ मुदा ॥६७॥
काषायवसनं पूतं जग्राह जनसंनिधौ ।
अभयं सर्वभूतेभ्यो मत्त इत्यप्यघोषयत् ॥६८॥
उपदिष्टं महावाक्यं गुरुणा वरयोगिणा ।
सर्वज्ञस्यापि मर्यादामनुल्लङ्घ्य विधेस्तदा ॥६९॥
एषणात्रयहीनश्च प्रशान्तात्मा जितेन्द्रियः ।
संन्यासाश्रममासाद्य बभौ व्यास इवापरः ॥७०॥
ववन्दिरेऽखिलास्तं तु पौरजानपदा जनाः ।
श्रुत्वैतत्तु समायाता भक्त्या च विनयेन च ॥७१॥
ब्रह्मसूत्राणि गीतां च तथा श्रुतिशिरांसि च ।
शांकराणि च भाष्याणि पठन्कालं समत्यगात् ॥७२॥
नैमिशारण्यवद्भाति कावेरीतीरमण्डपः
संन्यासिभिश्च बहुभिर्मुनितुल्यैर्जनैर्वृतः ॥७३॥
उदाहरन्त. प्रणवं तारकं नाम ते शुभाः ।
पावयन्तः स्ववासेन भुवं पुण्यतमास्तदा ॥७४॥
त्यागराजः प्रशान्तात्मा तेषां शेखरवत्स्थितः ।
पश्यन्योगेन निखिलं ब्रह्मरूपमनामयम् ॥७५॥
दिवसाः केचनेत्थेवं क्षणवद्भङ्गुरङ्गमा ।
प्रकटीकुर्वतामत्र ब्रह्मलोकमनुत्तमम् ॥७६॥
कदाचित्संगवे काले त्यागराजं तपोधनम् ।
उपासाञ्चक्रिरे शिष्या मुनयः शंकरं यथा ॥७७॥
दूरादप्यागताः शान्ताः पण्डिता वणिजः शुभाः ।
परिवार्याभ्यवर्तन्त पश्यन्तश्च तमेव हि ॥७८॥

तुर्विंशे च दिवसे वासरे शशिपुत्रके ।
पञ्चम्यामसितेपक्षे प्रायात्सांतानिकं विभुः ॥१०४॥
स्वाराधकं न मनुते स्वालयागामिनं न च ।
स्वनामोच्चारकं नैव भक्तप्राणो रघूत्तमः ॥१०५॥
परितुष्यति पूतात्मा भक्तानां पूजयैव हि ।
भक्तदेहो रघूत्तंसश्चरत्यत्र महीतले ॥१०६॥
प्राप्य पञ्चनदं पूतं स्नात्वा पुण्यसरिज्जले ।
सेव्यः समाधिर्महतो यदीच्छेज्जन्मनः फलम् ॥१०७॥
समाधिरूपस्त्यागेशो रामसालोक्यभागिह ।
स्मरतां गृणतां चैव कुरुते सर्वमङ्गलम् ॥१०८।
ग्रथितं सुन्दरेशेन विद्याबालेन केवलम् ।
श्रुत्वैवौरसबालस्य वचस्तुष्यन्तु पण्डिताः ॥१०९॥
मङ्गलायतनं विष्णुर्मङ्गलायतनं शिवः ।
तयोः संमेलनाद्रामः कुर्यान्नः सर्वमङ्गलम् ॥११०॥

॥ इति श्रीत्यागराजचरिते सुन्दरेशार्यविरचिते सांतानिकगमनं नाम पञ्चदशः सर्गः ॥

समाप्तोऽयं ग्रन्थः ।

श्रीरामो जानकीजानिः शरणम् ॥

---

# शोधनपत्रम् ।

| पृष्ठम् | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| viii | 9 | paeon |
| x | 6 | भवदम्बु० |
| xii | 10 | ०भूषणो नारदादि० |
| xiii | 11 | ०पद एव |
| ३ | ११ | शीतजलेन |
| ४ | २० | ०स्तवस्ततः |
| १५ | २५ | बहूः समाः |
| २० | १२ | प्रतीचीं दिशमास्थाय |
| २२ | ६ | संप्रेक्ष्य |
| ,, | २३ | समागमात् |
| २४ | १४ | तटोद्यानै० |
| ,, | २५ | भृशविस्मितः |
| ३२ | ११ | ०प्रासकृच्छ्रैः |
| ३३ | १९ | चेष्टितानि |
| ४० | ७ | ०वशी नित्यं यथोक्तं |
| ४१ | २१ | सः |
| ४९ | २१ | स्वकार्यकरणे |
| ,, | २६ | याचामो गर्दभं कल्पका० |
| ५४ | ३ | मेलांश्च नूतनान् |
| ,, | २१ | जनमङ्गोत्थो |
| ५८ | २५ | संचिन्तय० |
| ५९ | १६ | ०पुंगव |
| ६३ | १० | तथा नाहं |
| ६७ | २२ | ०चित्तशान्ति० |
| ७० | ७ | पापनिश्चयः |
| ,, | २६ | किंचित्स |
| ७४ | १७ | किं वा |

| | | |
|---|---|---|
| ८३ | २५ | भृशमप्रियम् |
| ,, | २५ | अलंकृत्य |
| ८४ | ६ | प्राप्तः |
| ८९ | .१४ | गदन्तश्च |
| ९६ | १० | त्वमयमन्तासि |
| ९८ | १८ | उल्लङ्घ्य |
| १०१ | १६ | कैर्न वा |
| १०३ | ८ | ०मालम्ब्य |
| १०४ | २० | संप्रार्थितश्च |
| १०७ | १७ | ०दुःसहवेदनः |
| ,, | १८ | स पर्यङ्के |
| १०८ | १३ | नायं |
| ११४ | २ | भुञ्जते |
| ११७ | २१ | ०बुध्यते |
| १२२ | १ | ०स्तोयदा |
| १२३ | २१ | ०स्तत्कार्य० |
| ,, | २६ | ०दानेन |
| १२५ | १२ | तुष्यत पुत्रिणः |
| ,, | १९ | ०मानतः |
| १२६ | २२ | ०सितः सदा |
| १२९ | ५ | मम प्रियम् |
| १३३ | ५ | प्राप्य चाश्रमम् |
| १३४ | ११ | आचन्द्रार्कं |
| ,, | १४ | लप्स्यन्ते |
| ,, | १७ | मनःप्रह्ला० |
| १३५ | ११ | पौर० |
| १३८ | २ | ०मसिते पक्षे |